ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

**त्रैमासिकी शोध-पत्रिका**

# शोध-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

**४० वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) २०१५ ई०**

सम्पादकः
**प्रो० रमेशकुमारपाण्डेयः**
कुलपतिः

सहसम्पादकः
**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

**सम्पादकमण्डलम्**

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

प्रो० भागीरथिनन्दः

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

दुःखपङ्कनिमग्नानामुद्दिधीर्षुः परमकारुणिको मुनिः आन्वीक्षिकीं प्रणिनाय। निःश्रेयसप्राप्तये महर्षिः कणादः वैशेषिकसूत्रं प्रणिनाय एवं सर्वे दार्शनिकाः दुःखस्यात्यन्तिकनिवृत्तये स्वस्वशास्त्रस्योपदेशं चक्रुः। सर्वेषां शास्त्राणां मुख्यं प्रयोजनं सुखस्य प्राप्तिर्वा दुःखस्यात्यन्तिकनिवृत्तिर्वा विद्यते। सुखस्यापरं नाम आनन्दोऽपि वर्तते। सांसारिकसुखोपभोगाद् जीवब्रह्मैक्यपर्यन्तं प्रमातुरानन्दानुभूतिरुपलभ्यते। आ समन्तान्नन्दति नन्दयति वा समृद्धो भवति समृद्धं करोति कारयति वा आनन्दः। लौकिकेच्छायाः वा अलौकिकेच्छायाः अनुकूलानां पदार्थानां सम्प्राप्त्यनन्तरं यदनुभूयते तदेव सुखं वानन्दः। वा ईप्सितप्राप्तौ चित्तस्थैर्याद् दुःखनिवृत्तिपूर्वकपूर्वत्वस्वरूपा समृद्धिरेवानन्दपदार्थः। अत एवामरकोशकारैरुक्तम्-

**मुत्-प्रीतिः प्रमदो हर्षप्रमोदामोदसम्मदाः।**
**स्यादानन्दथुरानन्दशर्मशातसुखानि च॥** (1.4.24)

इति आनन्दस्य द्वादश अर्थाः भवन्ति। शब्दकल्पद्रुमवाचस्पत्यादिकोशग्रन्थेष्वस्य आह्लाद-सन्तोषप्रेमस्नेहादररुचिक्षेमकल्याणदुःखप्रशमनाद्यर्थाः निरूपिताः सन्ति। हर्षविषये उक्तञ्च-

**यदिन्द्रियाणि हृष्यन्ति हर्षयन्ति परानपि।**
**तस्माद्धर्ष इति ज्ञेयः प्रसादो मनसो हि सः॥**

काव्यशास्त्रग्रन्थेषु सञ्चारिभावानां स्वरूपनिरूपणप्रसङ्गे आनन्दार्थे हर्षशब्दस्य प्रयोगो दरीदृश्यते। ऋग्वेदस्य नवममण्डले एकस्मिन् मन्त्रे प्रतिपादितं विद्यते।

''यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते''। श्रुतौ आनन्दः परब्रह्मणः स्वरूपं विद्यते ''तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति'' ''आनन्दं ब्रह्मणो विद्वान्'' ''आनन्दो ब्रह्मेति व्यजानात्।'' 'आनन्दो वै रसः' 'रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति' एवं बहुनि वाक्यानि सन्ति।

शोधस्यापि प्रयोजनमानन्दानुभूतिर्विद्यत इति सत्यस्यान्वेषणे गवेषकाः नूतनतथ्यानि सम्प्राप्य आनन्दानुभूतिं कुर्वन्ति। तथाचानन्दप्राप्तये विविधविषयेषु नूतनाविष्काराणां संप्राप्तये अङ्कोऽयं भवतां समक्षे समुपस्थाप्यते।

शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषपरा त्रयोदश लेखाः प्रकाश्यन्ते। एवं प्रतिभा-विशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग

# वैदिकवाङ्मये समाजस्वरूपविमर्शः

**डॉ. शिवप्रतापद्विवेदी**

**वैदिकवाङ्मयम्–**

निखिलेऽप्यस्मिन् जगति सर्वेषां प्राणिनां कल्याणाय यत्किञ्चिदावश्यकं महत्त्वपूर्णञ्चासीत् तत्सर्वमस्माकं ऋषिमहर्षिभिः सम्यक्तया विचिन्तितम्। अत एव वेदाः ज्ञानराशयः। वेदाः न केवलं भारतीयानामपितु भुवः सर्वासां मानवजातीनां प्राचीनाः ग्रन्थाः सन्ति। वेदाः विविधविद्यानां सकलशास्त्राणां, सर्वधर्माणां, विश्वसंस्कृतीनां विभिन्नदर्शनानाञ्च स्रोतांसि वर्तन्ते। सायणाचार्येण वेदशब्दस्य व्युत्पत्तिं कुर्वता विलिखितम्–

**इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः।**[1]

इत्थमेव ऋक्प्रातिशाख्यवृत्तिकारेण विष्णुमित्रेणापि वेदशब्दार्थं प्रकाशयता कथितम्– **विद्यते ज्ञायते लभते वैभिर्धर्मादिपुरुषार्था इति वेदाः**[2] तथा च **मन्त्रब्राह्मणयोर्वेदनामधेयम्,**[3] एताभिः सर्वाभिः व्युत्पत्तिभिः वेदानां ज्ञानमयता, सिद्धिदृष्टिविधायकता, पुरुषार्थचतुष्टयसाधकतादिगुणाः सुस्पष्टाः भवन्ति।

**वेदानामाविर्भावः –**

वेदानामाविर्भावः कदा बभूव? इत्यस्मिन् विषये विदुषां मध्ये विविधाः विसंवादाः दृश्यन्ते। केचन अस्मात् कालात् लक्षत्रय-वर्षपूर्वम् अपरे ईसवीय-संवत्सरात् पञ्चविंशतिसहस्रवर्षपूर्वम्, अन्ये पञ्चशताधिकचतुःसहस्रवर्षपूर्वं वेदरचना कालं मन्यन्ते। परं स्वदेशसंस्कृतिगौरवशालिनः श्रीमन्तः सायण-दयानन्द-सातवलेकरादयो वेदविद्याविशारदाः मनीषिणः सृष्टिरचनाकालादेव वेदाविर्भावं स्वीकृतवन्तः। वस्तुतः सृष्ट्यादौ परमेशकृपया निर्मलान्तःकरणैः ऋषिभिः वेदमन्त्राणां दर्शनमकारि। अतएव सत्यमिदम् ऋषयो मन्त्रद्रष्टारः। एतावता वेदानामीश्वरत्वं, अपौरुषेयत्वं स्वतः प्रमाणितं भवति।

---

1 तैत्तिरीयसंहिता भाष्यभूमिका (आनन्दाश्रम पुणे)

2 ऋक्प्रातिशाख्यमङ्गलाचरणस्य वृत्तिटीकायाम्

3 सर्वानुक्रमणिका भूमिका

**वैदिकसाहित्यम्-**

विश्वऽस्मिन् समुपलब्धेषु विश्वसाहित्येषु वैदिकसाहित्यं सर्वोत्कृष्टं स्थानं भजते । अस्य अतीवविशालं विलक्षणं च वैदिकसाहित्यं संहिता, ब्राह्मणानि, आरण्यकानि, उपनिषद्ग्रन्थाश्चेति। एतावन्मात्रं वैदिकसाहित्यमङ्गीकृत्य साहित्यसमालोचकैः तत्र मन्त्रसंग्रहरूपाः चतस्रः संहिताः, ऋग्वेदसंहिता, सामवेदसंहिता, यजुर्वेदसंहिता, अथर्ववेदसंहिताश्च सन्ति । वेदानां व्याख्याभूतानि ब्राह्मणानि, ब्राह्मणग्रन्थानां परिशिष्टानि आरण्यकानि। आरण्यकानां च परिशिष्टभागाः ब्रह्मविद्यासरोवररूपाश्च उपनिषदः सन्ति। एतानि स्रोतांसि हि अङ्गीकृत्य समेषां शास्त्राणां प्रमाण्यं वरीवर्त्ति। वेदेषु सामाजिकदृष्ट्या अथर्ववेदो बहुविशिष्टताः निदधाति। यदा ऋग्वेदादयः त्रयो वेदाः आमुष्मिकं फलं प्रददति तदा अथर्ववेदो ऐहिकं फलं प्रयच्छति। वैदिकवाङ्मयस्याध्ययनेन वैदिकयुगस्य भौगोलिकीस्थिति आर्याणां निवासस्थलानि, दस्युपणिप्रभृतीनां विवरणं, सर्वेषां सामाजिकं आर्थिकविवरणञ्च प्राप्यते।

**(1) सामाजिकं जीवनम्-**

समाजिकजीवनस्य विचारावसरे सामाजिकाः सर्वप्रथमं जनानां सामाजिकभेदार्थिकीस्थिति–शिक्षापद्धत्यावासव्यवस्थादीनां विषायाणां विचाराः समाधिगच्छन्ति। तत्र सर्वप्रथमं वैदिकसमाजः आर्यदस्युभेदेन द्विविधो विभक्त आसीत्। आस्तिक–धार्मिक– सदाचारादिगुणसमन्विता आर्याः, तद्विपरीताः दस्यवः। इमे दस्यवः शिल्पकर्मणि निपुणाः आसन्। परवर्तिकाले समाजो वर्णचतुष्टये विभक्तो जातः। सुप्रसिद्धपुरुषसूक्ते समाजस्य परिकल्पना विराट्पुरुषे कृत्वा समाजस्य वर्गीकरणं चतुर्विधम्प्रतिपाद्यते। तद्यथा–

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥**[1]

अर्थात् प्रजापतेः मुखात् ब्राह्मणः, बाहुभ्यां क्षत्रियः, जानुभ्यां वैश्यः, पद्भ्यां शूद्रः प्रादुर्भूतः। समाजस्य चित्रमेतत् कर्मणाऽसीत्, न तु जन्मना। यो जनः यत् कर्म करोति स्म, तदनुरूप एव तस्य वर्णः भवति स्म। तत्र वेदानामध्ययनमध्यापनं, यजनं, याजनं, ब्राह्मणानां प्रमुखं कर्म आसीत्। परं कृषिप्रभृतिकर्मभ्यः ते सर्वथा विरक्ताः नासन्। राज्यसञ्चालनसेनासञ्चालनादि क्षत्रियवर्णस्य प्रमुखं कर्मासीत्। कृषिकर्म गोपालनं वाणिज्यञ्च वैश्यानां कर्मासीत्। समाजसेवा शिल्पविद्यादि च शूद्राणां कर्मासीत्। सम्पूर्णसमाजः कार्यरूपे विभक्तोऽपिसन् परिवाररूपे एक एव आसीत्। एकपत्नीत्वव्रतं प्रचलितमासीत्। समाजे नारीणां गौरवास्पदं स्थानमासीत्। स्त्रीशिक्षाप्रचलनत्वादेव ऋग्वेदे एकविंशति मन्त्रद्रष्टृणां ऋषिकाणां वर्णनमुपलभ्यते। स्वयंवरविवाहस्य प्रचलनमपि प्राप्यते। शिक्षाक्षेत्रे कापि भेदभावना नासीत्। पितृसम्पत्तौ पुत्रकन्ययोः समोऽधिकार आसीत्। वैदिकसमाजे एकस्मिन्नेव परिवारे विभिन्नवर्णगतव्यवसायसन्नद्धाः जनाः पारस्परिकसौमनस्यपूर्वकं निवसन्तिस्म। तस्य वर्णनं ऋग्वेदे प्राप्यते। तद्यथा–

1 ऋग्वेद 10/90/12

**कारुरहं ततो भिषगुपलप्रक्षिणी नना।[1]**
**नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्द्रो परिस्रव।।**

अयं भावः अहं कारुः=रचनाकारः कविः, ततः=मत्परः अर्थात् मत्पुत्रः, भिषग्=वैद्यः, नना=कन्या उपलक्षणी=उपलखण्डेषु प्रक्षिणोति सक्तुकारणी, नानाधियो=विभिन्नेषु कार्येषु संलग्नेष्वपि वयं वसुकामाः गावः इव अन्वास्थिताः स्मः। अनेन मन्त्रेण सिध्यति यत् विभिन्नेषु कार्येषु सन्नद्धेष्वपि जनाः एकस्मिन् परिवारे सौहार्दपूर्णा निवसन्ति स्म ।

समाजशास्त्रीयदृष्ट्या वैदिकसाहित्यं अत्यन्तं महत्त्वपूर्णं वर्तते। समाजस्य विकासस्य सभ्यतायाः समुन्नतेः वर्णानां विविधवृत्तिपराणां नराणाञ्च क्रियाकलापस्य सामाजिकव्यवस्थायाश्च महत्त्वपूर्णमितिवृत्तं वैदिकवाङ्मये उपलभ्यते। वैदिकसाहित्यस्य गभीरचिन्तनेन ज्ञायते यत् तत्समये जनाः निर्भीकाः निःस्वार्थाः नारीसम्मानसम्बर्द्धकाः राष्ट्रियचेतनाप्रबोधकाः जागरूकाश्चासन्।

**(क) संस्काराः-**

संस्कारो हि भारतीयसंस्कृतेरपरिहार्यमङ्गम्। संस्कारेण विना किमपि विशिष्टं कार्यं न संपादयितुं शक्यते। तत्र जन्मकालादारभ्य मरणपर्यन्तं षोडशसंस्काराः आसन्। संस्कारविषये वैदिकसाहित्ये संस्कृतपदस्य तु बाहुल्येन प्रयोगो लभ्यते। तद्यथा-**'न संस्कृतं प्रमिमीतो गमिष्ठाऽन्ति नूनमश्विनोपस्तुतेह[2]'** इत्यत्र पवित्रितेऽर्थे। **'न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुपयन्ति ता अभि[3]'** इत्यत्र परिष्कृतार्थे

**'सऽइदं देवेभ्यो हविः संस्कुरु साधु संस्कृतं संस्कुर्वित्येवैतदाह[4]'** इत्यत्र दोषोपशमनार्थे संस्कृतस्यार्थः प्रसिद्धः। अत एव सिध्यति यत् वैदिककाले प्रयुक्तः संस्कृतशब्दः अधुना संस्कारार्थे प्रचलितो वर्तते। संस्कारो नाम स भवति यस्मिन् जाते जनः पदार्थोवा भवति योग्यः कस्यचिदर्थस्येति। तत्र व्यासस्मृतौ षोडशसंस्काराणां समुल्लेखः प्राप्यते । तद्यथा-

**गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।**
**नामक्रिया निष्क्रमणोऽन्नप्राशनं वपनक्रिया।।**
**कर्णवेधो व्रतादेशो वेदारम्भ-क्रियाविधिः।**
**केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः।**
**त्रेताग्निसङ्ग्रहश्चेति संस्काराः षोडशस्मृताः।।[5]**

तत्र गर्भाधानजातकर्मचूडोपनयनादि संस्कारैर्बीजगर्भसम्बद्धदोषाणां परिहारो भवति। पुसंवनश्च

1. ऋग्वेद सं. 9/112/33
2. ऋग्वेद 5/76/2
3. ऋग्वेद 6/28/4
4. शतपथब्राह्मणे 1/1/4/10
5. व्यासस्मृतिः1/13-14

गर्भं पुंस्करोति। सीमन्तोन्नयनञ्च गर्भस्थ शिशुं पापान्मोचयति। जातकर्मसंस्कारो हि समस्तगर्भदोषं परिहरति। एवमेव नामकरणान्नप्राशनचूडाख्यैश्च संस्कारैः गर्भोपघातजसमस्तदोषाः परिह्रियन्ते। उपनयनेन द्विजत्वमुत्पद्यते। व्रतैश्च स्वाध्यायः, विवाहेन गार्हस्थ्यादिकम्। संस्काराः न केवलं दुरितापहारका एव अपितु योग्यताधायकाश्च। अतएव संस्काराः वैदिकसमाजस्य महत्त्वपूर्णमावश्यकञ्च कर्माऽसन्। संस्काराः सर्वेषां कृते अनिवार्या आसन्।

## (ख) आश्रमव्यवस्था–

आश्राम्यन्ति स्वं–स्वं तपश्चरन्ति यत्रेति आश्रमः, शास्त्रोक्तधर्मविशेषः। मानवस्य जीवनं सोद्देश्यमस्ति, न कदापि निरुद्देश्यम्। एतादृश उद्देश्यस्तु पुरुषार्थचतुष्टयसिद्धिरेव। स च धर्मार्थकाममोक्षाख्यः। धर्मो हि बुद्धेर्विषयः, अर्थस्तु शरीरस्य, कामो हि मनसो, मोक्षस्त्वात्मनः। जीवनमनित्यं स्वल्पमायुरुद्देश्यश्च विशाल इति स्वल्पेनैव कालेन बृहदुद्देश्यप्राप्तये प्रयतितव्यं जनैः। तेन हि जीवनं यथोद्देश्यं विभज्य तत्तन्निमित्तं तत्तदनुकूलकृत्यानि सम्पादितानि भवन्ति। यथा हि समाजसुसञ्चालनाय समन्वयाय च ब्राह्मणक्षत्रियवैश्यशूद्राख्या चत्वारो वर्णाः सृष्टाः। तत्र गुणप्राशस्त्यामाधृत्य सत्वोत्कर्षे ब्राह्मण्यं, रजसोत्कर्षे क्षत्रियत्वं, रजस्तमसोः साम्ये वैश्यत्वं, तमसः प्रकर्षे तु शूद्रत्वं तथैव पुरुषार्थचतुष्टयदृष्ट्या जीवनस्य हि चत्वार आश्रमाः निर्दिष्टाः ब्रह्मचर्यं, गार्हस्थ्यं, वानप्रस्थः संन्यासश्च। ब्रह्मचर्यं हि ज्ञानशक्तिविवेकार्जनाय, गार्हस्थ्यं हि धर्मार्थकामसिद्धिद्वारा आनृण्याय, वानप्रस्थः भावविशोधनाय, संन्यासस्तु मोक्षसिद्धये।

आश्रमाणां सङ्केतो वेदेष्वपि लभ्यते परं स्पष्टतया तद्विभागस्तु प्राथम्येन छान्दोग्योपनिषदि दृश्यते। तत्रोक्तम्–**'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति'**[1] चतुर्थाश्रमत्वेन संन्यासस्योल्लेखः प्रथमतो जाबालोपनिषदि प्राप्यते।

### (अ) ब्रह्मचर्याश्रमः –

ब्रह्मचर्यं हि कठिनतमं तपः। तद् वरणेन तेजस्तितिक्षासद्बुद्धिस्वस्थतादि गुणानां वृद्धिः भवति। अतस्तत् प्रशंसन्नाह–**'ब्रह्मचर्येण तपसा देवामृत्युमुपाघ्नत'** अर्थात् ब्रह्मचर्यतपमाध्यमेन देवाः मृत्योरुपरि विजयं लब्धवन्तः ।

### (ब) गृहस्थाश्रमः –

भारतीयाः गार्हपत्यजीवने सांसारिकान् भोगान् विहातुं मानवं नोपदिशन्ति। परं तेषामुपभोगोमनासक्तिपूर्वकमेव काङ्क्षन्ति। तस्योल्लेख ऋग्वेदे प्राप्यते तद्यथा–

**ईहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम्।**
**क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे।।**[2]

1 छान्दोग्योपनिषद् 2/23/1

2 ऋ. 10/85/42

अयं भावः, अत्रैव निवसन्तु, अन्यत्र मा गच्छन्तु, स्वग्रहे पुत्रैः नप्तृभिः सह मोदमानः क्रीडन्तः स्वजीवनं यापयेयुः। अत्र स्वपरिजनानां मध्ये निवासाय निवेदनं परिदृश्यते ।

**( स ) वानप्रस्थाश्रमः -**

वानप्रस्थाश्रमोऽध्यात्मिकभावनाया भूमिर्वर्तते। यथा दीपस्य आलोकः तमो विधूय प्रकाशं विकरति तथैव संकटोद्भूताम् उद्विग्नतां निरस्य वैखानस व्रतधारेणन पुंसि ज्ञानं सञ्जायते।

**( द ) संन्यासाश्रमः -**

संन्यासाश्रमं प्रविश्य मानवो जीवनस्यान्तिमं लक्ष्यमधिगच्छति। एष आश्रमो मुक्तेर्द्वारमिव। दुःखानामात्यन्तिकनिवृत्तिः तत्वज्ञानाधिगमनमन्तरेण असम्भवा। तज्ज्ञानलाभाय भारतीया संस्कृतिः संन्यासाश्रमवादिनी भूत्वा जगति विद्योतते। निश्चप्रचतया भारतीया एषा आश्रमवासनी व्यवस्था संसारं उत्तरोत्तरमुन्नयति।

**( 2 ) आर्थिकजीवनम्-**

वैदिकयुगे आर्थिकव्यवस्था अत्युन्नताऽसीत्। आर्थिकजीवनस्याधाररूपेण कृषिकर्म पशुपालनं चोपलभ्यते। तद्यथा-

**आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे।**[1]
**प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहाना।।**

अत्र हे गावः अस्मदीयं गृहमागच्छन्तु कल्याणं कुर्वत्यो गोष्ठे सीदन्तु। इह नानावर्णाः गावः संततिसहिता इन्द्राय उषसः प्रति दुहाना स्युः। अत्र संततिसंहिता इति शब्देन ज्ञायते यत् तदानीन्तना जनाः गोपालनं व्यावसायिकरूपेण कुर्वन्ति स्म। तथा पशुषु गवां स्थानं सर्वोत्कृष्टमासीत्। सैव अघ्न्या अदिति मातेत्यादिनामभिर्निर्दिश्यते। गवां प्रशंसा जनाः सभायामपि कुर्वन्ति स्म। तद्यथा-

**यूयं गावो मेदयथा कृशं चिदश्रीरं चित् कृणुथा सुप्रतीकम्।**
**भद्रं गृहं कृणुथ भद्रवाचो बृहद् वो वय उच्यते सभासु।।**[2]

अत्र सायणचार्यः हे गावः यूयं मेदयथ=स्नेहयथ। आप्यायनं कुरुथेत्यर्थः। कृशं चित् = क्षीणं, अश्रीरं चित् =अश्लीलमपि, सुप्रतीकं=शोभनाङ्गं, कृणुथ= कुरुथ। हे भद्रवाचः =कल्याणध्वन्युपेता गावः, अस्मदीयं गृहं भद्रं =कल्याणं, कृणुथ=गोभिरुपेतं कुरुथ, सभासु=यागपरिषत्सु वो=युष्माकं बृहत्=महत् वयः=अन्नम्, उच्यते =सर्वैः दीयते । अत्र स्वगृहे निवासाय स्वकल्याणाय च गवां प्रति निवेदनं विधीयते। अनेन ज्ञायते यत् ते गवां सर्वोत्कृष्टं मन्यन्ते स्म ।

---

1 ऋग्वेदः 6/28/1

2 ऋग्वेदः 6/28/6

**( क ) कृषिकर्म–**

वैदिकसाहित्याऽध्ययनेन ज्ञायते यत् पृथिव्यां कृषिविद्यायाः विकासः सर्वप्रथमं देवगणाः स्व–स्व परशुं धृत्वा प्रजाजनैः सह परशुप्रयोगद्वारा वनानि छित्वा तृणानि दाहयित्वा च भूमिं कृषिकर्मयोग्यमकुर्वन्। तदुक्तम् –

**देवास आयन् परशूँरबिभ्रन् वना वृश्चन्तो अभि विड्भिरायन्।**

**निसुद्रवं दधतो वक्षणासु यत्रा कृपीष्टमनु तद् दहन्ति॥**[1]

अद्यापि कृषकैरियमेव प्रक्रिया अनुस्रियते। ऋग्वेदमन्त्रेण ज्ञायते यदियं पृथ्वी दृढाऽस्ति तदा तस्याः रूपपरिवर्तनं कुर्वन्ति स्म। यथा–[2]**येन द्यौरुग्रा पृथ्वी च दृढा येन स्वः स्तभितं येन नाकः।** अत्र दृढस्वरूपापृथ्वी उक्ता। तस्मात् कठोररूपायामस्यां पृथिव्यां शस्योत्पादनाय तस्याः स्वरूपपरिवर्तनमावश्यकं मत्वा कर्षणकर्मविधीयते। कर्षणकर्मकृत्वा जलसेञ्चनञ्च क्रियते। जलसेञ्चनाय तदा गंगा–यमुना– सरस्वती–शुतुद्रि–विपाशादीनां नदीनां वर्णनं वैदिकवाङ्मये श्रूयते। पवित्र सरस्वत्यास्तटे यवस्योत्पादनक्रियायाः वर्णनमपि अथर्ववेदे प्राप्यते। तद्यथा–

**देवा इमं मधुना संयुतं यवं सरस्वत्यामधि मणावचर्वृषुः।**

**इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानवः॥**[3]

अर्थात् कृषिकर्मणि इन्द्रः कृषकस्य कार्यं कृत्वा सरस्वतीनद्यास्तटे सस्योत्पादनं भूमौ मधुर–रसोपेतस्य यवस्य वपनं कृतवान्। अनेन मन्त्रेण वैदिकसमाजस्य कृषिकर्मोपरि दृष्टिः सद्यः जायते। यजुर्वेदस्य माध्यन्दिनतैत्तिरीयसंहितयोश्च द्वादशविधानामन्नानां नामानि उल्लिखितानि सन्ति। तद्यथा–

[4]**व्रीहयश्चमे यवाश्चमे माषाश्चमे तिलाश्चमे मुद्गाश्चमे खल्वाश्चमे प्रियङ्गवश्चमेऽणवश्चमे श्यामाकाश्चमे नीवाराश्चमे गोधूमाश्चमे मसूराश्चमे यज्ञेन कल्पन्ताम्।** इत्थमनेकेषामन्नानां नामानि वैदिकसाहित्ये उपलभ्यन्ते। कृषिकर्मणो माहात्म्यमुद्बोधयन् निगदति– **अक्षैर्मादीव्य कृषिमिति कृषस्व** – अर्थात् क्रीडां मा कुरु, कृषिकार्यं कुरु। अनेन प्रकारेण ज्ञायते यत् वैदिकसमाजे जनानां कृषिकर्म प्रमुखं कर्मासीत्।

**( ख ) व्यापारः–**

वैदिकयुगे पशुपालनं वैयक्तिकरूपे केवलं नासीत्। तस्य व्यावसायिकरूपोऽपि प्रचलित आसीत्। अत एव विभिन्नव्यावसायिकेषु मध्ये गोपालानाम्, अजपालानाम्, अविपालानामुल्लेख्यो

---

1. ऋग्वेद 10/28/8
2. ऋग्वेद 10/12/15
3. अथर्ववेद 6/30/1
4. शु. य. 18/12, तै. सं. 4/7/4/2

दृश्यते। आर्थिकजीवनस्याधाररूपेण कृषिः पशुपालनं चोपलभ्यते। कृषिकर्मणि वृषभाः प्रायुज्यन्त। सेचनसाधनानि नदी-कूप-कुल्यादीन्यभूवन्। अन्नेषु गोधूम-यव-व्रीहि-चणक-माष-तिलादयो मुख्याः आसन्। कृषिकर्मातिरिक्ताः वृत्तयः उद्योगाश्च प्राचलन्। तद्यथा-तक्षकारहिरण्यकारलौहकारचर्म-कारवासोवायादिवृत्तयः प्रावर्तन्त। व्यापारकर्मणि प्रवृत्ता वणिजोऽभवन्। वस्तुविनमयमूलकं क्रयविक्रयं प्राचरत। मुद्रासु निष्कं मुख्यमासीत्। समुद्रव्यापारावस्थितिरपि विज्ञायते। सामुद्रिकव्यापारजो लाभो वा कुसीदवृत्तिरपि प्राचरत् अष्टमांशः षोडशांशो वा कुसीदरूपेणाऽगृह्णन् तद्वृत्तिका उत्तमर्णाः।

**सारांशः -**

निष्कर्षरूपेण कथयितुं शक्यते यत् वैदिके युगे अत्यन्तसमृद्धा अर्थव्यवस्थाऽसीत्। वैदिकसमाजे आबालवृद्धाः स्त्रीपुरुषाः अनुशासिता आसन्। सर्वे शिक्षिताः कुशलाः कलावन्तो राष्ट्रियभावनया ओतप्रोताः समन्वयवादिनः नीतिप्रियाश्चासन्। वैदिकसमाजे मुख्यतो द्वौ भेदौ आस्ताम्। तत्र ऋषीणां गोत्रमवलम्ब्य गर्गभारद्वाजादिगणाः एवं ब्राह्मणादिवर्णा अपि गणत्वेन दृश्यन्ते। इत्थं विविधेषु गणेषु विभक्तेष्वपि सम्पूर्णराष्ट्रियसमाज एक एव आसीत्। सर्वे राष्ट्रियाः सामाजिकाश्च आपत्सु विपत्सु मतैक्येन सम्मिलन्तिस्म। राष्ट्रियोत्थानमेव सर्वेषामेकं लक्ष्यमासीत्। आदानप्रदानप्रवृत्तिं ते सामाजिकस्यार्थिकस्य चोत्कर्षस्य कुञ्जिकां मन्यन्तेस्म। वेदेषु लब्धाः समनसः, संव्रताः, समाकूतीः, अनुवर्त्मा, ज्यायस्वन्तः, मा वियौष्ट, सधुराश्चरन्तः, सध्रीचीनाः, संराधयन्तः, अन्यो अन्यस्मै वल्गु वदन्त एत इत्यादिशब्दाः सामाजिकताया एकतायाश्च चरमोत्कर्षस्य सूचकाः सन्ति।

इत्थं प्रकृतवेदाध्ययनेन विज्ञायते यद् वेदेषु भिन्नजातिवर्गवर्णादिषु स्थितेष्वपि सर्वेषां समुचितनिर्वाहार्थं सुव्यवस्थितनीतिनिर्धारणं तदा जातमासीत्। एतेषां सामदानाद्युपायवत् नीतिव्यवहारेषु क्रमो दृश्यते। वर्गाधिकारादिभेदास्त्ववश्यमेवासन्, परं सर्वेषां मौलिकाधिकारव्यवस्था समुन्नतासीत्। यद्यपि राज्ञः पदं सर्वश्रेष्ठं सर्वमान्यं चासीत्, परं तदपि विधिनियन्त्रितमासीत्। विविधप्रायश्चित्तदण्डादिव्यवस्था द्वारा सामाजिकनियन्त्रणं दृश्यते। अनुशासितानां वैदिकानां बुद्धिपूर्वकं कठोरपरिश्रमेषु विश्वासः आसीत्। सर्वेषां कल्याणं तेषां मुख्या कामनासीत्। अत एव इदं वैदिकवाङ्मयं सामाजिकसमरसतां विभर्ति, विविधास्तदुपदेशाश्च समस्तलोकाय अनन्तकालाय कल्याणाय प्रयुक्ता इत्यत्र नास्ति काचिद् विप्रतिपत्तिरिति शम्।

# भास्कराचार्यस्य ज्योतिषशास्त्रीयं शब्दार्थसौन्दर्यदर्शनम्

**पं. रामदेवझा "विनोदः"**

सह्याद्रि निकटवर्तिनि बिज्जडविड (बीजापुर) नाम्नि नगरे शाण्डिल्यगोत्रावतंसः श्रौतस्मार्त्तविचाराचारनिपुणो गणचकक्रचूडामणिः श्रीमान् महेश्वरोपाध्यायः समासीत्। तस्यायं तनूजन्मा भास्करसमानधर्मा विधि- विहितसुकर्मा सिद्धान्तज्योतिषशास्त्रग्रन्थप्रणेता भास्कराचार्यः षट्त्रिंशदधिकैक-सहस्त्रमिते शालिवाहनशके (1036 शके) प्रादुरभूत्। स च पितुः सकाशान्महेश्वरोपाध्यायात् सम्यगधीतविद्यो विविधशास्त्राभज्ञो गणितपारावार- पारीणो नयविनयविचारचातुरीधुरीणः काव्यकलाकलापाञ्चितमतिः धियां विभूतिः वाक् पाटवं दधानो गणककमलमालाभाषकः सकलसिद्धान्तैकसारं सिद्धान्तशिरोमणिमकार्वीत् षट्त्रिंशत्तमे वयसि।[1]

अथ सिद्धान्तशिरोमणेश्चत्वारोऽध्यायाः सन्ति- गणिताध्यायः, गोलाध्यायः, लीलावतीसंज्ञः पाट्यध्यायः, चतुर्थो बीजगणिताध्यायश्च। भास्कराचार्यप्रणीतेषु ग्रन्थेषु वासनाभाष्यसहितौ गणितगोलाध्यायौ, लीलावती- संज्ञकं पाटीगणितं, बीजगणितं, करणकुतूहलं च एते समुपलभ्यन्ते, पठ्यन्ते, पाठ्यन्ते च सर्वत्र। भास्करकृतिरेव भास्करं व्यञ्जयति।

भास्कराचार्या अनेकशास्त्रज्ञाननिपुणा आसन्नित्यस्य विनिगमकं कस्यचित्पद्यम्-

**अष्टौ व्याकरणानि षट् च मिषजां व्याचष्टतास्संहिताः,**
**षट् तर्कान् गणितानि पञ्च चतुरो वेदानधीतेस्म यः।**
**रत्नानां त्रितयं द्वयं च बुबुधे मीमांसयोरन्तरं,**
**सद्ब्रह्मैकमगाधबोधमहिमा सोऽस्याः कविर्भास्करः॥**[2]

भास्कराचार्यस्य सर्वं वैदुष्यं तत्कृतित एव समायातीति विदुषां मनोविनोदाय प्रदर्श्यतेऽत्र मया।

सिद्धान्तशिरोमणौ[3] गोलाध्याये "यस्मात् क्षुब्धप्रकृतिपुरुषाभ्या" मित्यादिश्लोकस्य वासनाभ्याससहितस्य, "उत्पादकं यत्प्रवदन्ति बुद्धे" रित्यादिबीजगणितोक्तवचनस्य[4] "अस्मिन् विकारः खहरे न राशावि"[5] त्यादिवचनस्य, बीजं मतिर्विविधवर्णसहायनीत्यादेस्तथा बुद्धिरेव पारमार्थिकं बीजमिति

1. सिद्धान्तशिरामणौ गोलाध्याये।
2. सुधाकरद्विवेदिकृतलीलावत्यन्ते टिप्पणी।
3. सि.शि. गोलाध्याये भुवनकोशे श्लो.
4. बीजगणिते मंगलश्लोकः
5. तत्रैव श्लो. 4 धवर्णषड्विधौ

लेखस्य च परिदर्शनेन तस्य सांख्यवेदान्तादि दर्शनाभिज्ञत्वम्।[1] एवमेव तस्य शब्दशास्त्रज्ञानं, विज्ञानशास्त्रपाण्डित्यं, पुराणशास्त्राभिज्ञत्वं, गणितपारावारपारीणत्वं, नीत्याभिज्ञत्वञ्च पदे पदे दृश्यन्ते। तस्य विनयाभिज्ञत्वं कृतिज्ञत्वं, शिष्टत्वं, अश्लीलता राहित्यं, अनौद्धत्यं, बुद्धिमत्त्वं, भक्तिमत्त्वं, वचसां साधुत्वं, ग्रन्थरचनानैपुण्यञ्चेति सर्वे गुणास्तस्मिन्नेवागाधबोधमहीम्नि भास्करे राजन्ते उपदिशन्ति चास्मानल्पधियस्द् गुण गणाकलनाय। किन्त्वत्र निबन्धकलेवरविस्तारभयात् भास्कराचार्यस्य केवलं शब्दार्थसौन्दर्यसाहित्य- रसमाधुर्यमेव मन्दमतिरहं किंचित् प्रस्तोतुमुद्यतोऽस्मि।

## सिद्धान्तशिरोमणिः लीलावती च

भास्कराचार्यविरचितस्य "सिद्धान्तशिरोमणि" रिति ग्रन्थस्य प्रथमो भागो 'लीलावती' ति नाम्ना ऽलंकृतः। तत्र "लीलावती" ग्रन्थे वयं पाटीगणितस्य अर्थादङ्कगणितस्य क्षेत्रे भास्कराचार्यवैदुष्यस्याद्भुतं प्रदर्शनं पश्यामः।

गणितविषयकं नीरसं सर्वं प्रतिपद्यं सरसं काव्यरूपञ्चादधाति। लीलावती श्लोकशब्दार्थसौन्दर्यं कस्यापि सुहृदयजनस्य मनोहारि सरसं पदलालित्यं च चित्ताकर्षकं सहजमेवेति विषये "नहि कस्तूरिकामोदः शपथेन विभाव्यत" इति कथनमत्र संगच्छति।

सर्वप्रथमं मङ्गलाचरणे एव स्वकीये सुकृतिविषये श्रीगणेशं नमस्कृत्य सुस्पष्टरूपेण कथयति भास्करो यथा–

**प्रीति र्भक्तजनस्य यो जनयते विघ्नं विनिघ्नन् स्मृतस्तं**
**वृन्दाखडवृन्दवन्दितपदं नत्वा मतङ्गानमम्।**
**पाहीं सद्गणितस्य वच्मि चतुरप्रीतिप्रदां प्रस्फुटां,**
**संक्षिप्ताक्षरकोमलामलपदैर्लालित्यलीलावतीम् ॥**

अनेन प्रतिजानीते भास्कराचार्यो यदिमं पाटीगणितग्रन्थिं संक्षिप्ताक्षर- कोमलामलपदैर्व्यलिखम्। एतत्प्रतिज्ञा निर्वाहश्च आचार्येण महत्या योग्यतया कुशलतया च कृतः।

उपर्युक्तमंगलश्लोकं प्रदर्श्य पुनः श्रीगणेशं नमस्करोति यथा–

**लीलागललुलल्लोलकालव्यालविलासिने।**
**गणेशाय नमो नीलकमलामल कान्तये॥**

अर्थाल्लीलया गले लुलन्तो ये लोलाश्चञ्चलाः कालव्यालास्तेषां विलासो विद्यते यस्मिन् तस्मै नीलकमलामलकान्तये गणेशाय नमोऽस्तु।

अस्मिन् मंगलश्लोके लकारा बहवः सन्ति। गणनायां त्रयोदशल वर्णाः प्राप्यन्ते। एतावदेव नहि, अग्रे बालानां सुखंबोधाय साध्यगणितोदाहरणानि यानि प्रदर्शितानि भास्करेण तेष्वपि लकारस्याधिक्यं दृश्यते। अथ च यया शिक्षया पुरुषार्थचतुष्टयसाधनं भवेत्तदुद्दिश्यैव आचार्येण ग्रन्थरचना कृता।

---

1. तत्रैव श्लो. 4 धवर्णषड्विधौ

लीलावत्यां शब्दार्थसौन्दर्याणि सामरस्यापन्नानि दृश्यन्ते। तत्रैकस्याऽपि नाम्न: कथमिव विवृतिं मादृश: प्रस्तुतानि। यथा– समानजात्योरेव योगान्तरं भवतीतिनियमादेकादिस्थानीयाङ्केष्वेकादिस्थानीयाङ्कस्य योगो वियोगो वा समुचित:।

तदुदाहरणं यथा[7]–

**अये! बाले! लीलावति! मति मति! ब्रूहि सहितान्,**
**द्विपञ्चद्वात्रिंशत् त्रिनवतिशताष्टादश दश।**
**शतोपेतानेतानयुतवियुतांश्चापि वद मे,**
**यदि व्यक्ते युक्तिव्यवकलनमार्गेऽसि कुशला॥**

अत्र कोमलमतित्वं गणितस्य कठोरत्वञ्च उभयोर्दृष्ट्या यादृश: पदविन्यास्तस्तादृश एवानुप्रासोऽनायास एव सुतरां तदलङ्करोति।

अन्यच्च,

गुणनकर्मण: पञ्चमप्रकारो यत्रोक्तस्तत्रोदाहरणं यथा[8]–

**बाले! बालकुरङ्ग लोलनयने! लीलावति! प्रोच्यतां,**
**पञ्चत्र्येकमिता दिवाकरगुणा अङ्का: कति स्युर्वद्।**
**रूपस्थानविभागखण्डगुणने कल्पासि कल्याणिनिच्छिन्नास्तेन**
**गुणेन ते च गुणिता जाता: कवि स्युर्वद॥**

अर्थात् हे बाले बालकुरङ्गलोलवयने। लीलावति। यदि रूपस्थान- विभागखण्डगुणने कल्याऽसि, तर्हि पञ्चत्र्येक (135) मिताङ्का: दिवाकर (12) गुणा: कति स्यु: इति प्रोच्यताम्। अथ च ते गुणिता अङ्का स्तेन गुणेन (12) भक्ता: सन्त: कवि स्युरिति वद।

अत्रापि लकारमहत्त्वं भास्करेण प्रदर्शितं तथैवालंकारदर्शनं च कारितम्। अथ च सुकोमलमतिवतीनां मतिसौन्दर्यं, तच्चञ्चलमृगशावक-नयनगतिसौन्दर्यं कल्याणमयं गुण-गुणितं गणितसौन्दर्यं शब्दार्थ-सौन्दर्यसामरस्यं च दर्शितमत्राचार्येण। अनेन स्त्रीशिक्षा च सूच्यते।

अन्यच्च, यथा–

**पञ्चांशोलिकुलात्कदम्बमगमत् त्र्यंश: शिलीन्ध्रं**
**तयोर्विश्लेषस्त्रिगुणो मृगाक्षि! कुटजं दोलायमानोऽपर:।**
**कान्ते! केतकमालतीपरिमलप्राप्तैक - कालप्रिया -**
**दूताहूत इतस्ततो भ्रमति रवे भृङ्गोऽलिसंख्यां वद॥**[1]

अर्थात् हे मृगनयनि! हे कान्ते! येषां भ्रमराणां पञ्चमांश: कदम्बं, तृतीयांशश्च शिलीन्ध्रपुष्पं, अनयोस्त्रिगुणितमन्तरं कुटजपुष्पमगमत्। अथ च शेष एको भ्रमर: केतकीपरिमलदूतेन,

---

1. लीलावत्यां अभिन्नपरिकर्माष्ट के श्लो. 1

मालतीप्रियापरिमलदूतेन च आहूतः सन् एककालावच्छेदेन कां प्रति गमनमधिकं प्रीतिजनकमिति विचिकित्सायामेव खे शून्ये आकाशे इतस्ततो भ्रमति। तर्हि सर्वेषां भ्रमराणां संख्यां केति वद। अत्रापि लकारलसितेनोदाहरणेन शब्दार्थसौन्दर्यदर्शनं कोऽपि काव्यकलाकोविदः कर्तुं शक्नोति। उत्तरम्-15

अन्यच्च,

**षड्भागाः पाटलासु भ्रमर निकरतः स्वत्रिभागः कदम्बे**
**पादश्चूतद्रुमे च प्रदलितकुसुमे चम्पके पञ्चमांशः।**
**प्रोत्फुल्लाम्भोजखण्डे रविकरदलिते त्रिंशदंशोऽमिरेमे**
**तत्रैको मत्तभृङ्गो भ्रमति नमसि चेत् वा भवेद्भृङ्गसंख्या॥**[1]

अत्र प्रकृतिसंसर्गजन्यप्रमोदेन प्रशिक्षयता भास्करेण यच्छब्दालङ्करणं सहजं विप्रलम्भसहितं च प्रदर्शितं तदवश्यमेव वशीकरोति सहृदयान्।

अनेनोदाहरणेन कथ्यते यद् भ्रमरसमूहस्य षष्ठांशः पुष्पविशेषेषु, तृतीयांशः कदम्बे, चतुर्थांश आम्रवृक्षे, पञ्चमांशः चम्पके, त्रिंशदंशः, फुल्लपद्मपत्रे अमिरेमे तथा चैको मत्तभृङ्ग आकाशे भ्रमति तदा भृङ्गसंख्याकेति प्रश्नः। अपरञ्च, उत्तरम्=60

**कामिन्या हारवत्या सुरतकलहतो मौक्तिकानां त्रुटित्वा,**
**भूमौ जातस्त्रिभागः शयनतलगतः पञ्चमांशश्च दृष्टः।**
**प्राप्तः षष्ठः सुकेश्या गणक! दशमकः संगृहीतः प्रियेण,**
**दृष्टं षट्के च सूत्रे कथय कतिपयैर्मौक्तिकैरेषहारः॥**[2]

अत्रोदाहरणे सरसो भास्करो येन भास्वरभावेन प्रश्नमुपस्थापयति तेन प्रतीयते सत् समाधानाय कश्चिद् युवा गणक एवाधिकारी मान्यः कश्चिदिति तु न, कोऽपि गणनापटुरुक्तं गणितं कर्तुं क्षमः स्यादत एव 'गणक' इति सम्बोधनं दृश्यते। कथितञ्चास्मिन् उदाहरणश्लोके यत् कस्याश्चित् कामिन्याः सुरतकलहे मौक्तिकहारस्त्रुटितः। तत् तृतीयांशो भूमौ, पञ्चमांशः शय्यायां, षष्ठांशः कामिन्या, दशांशश्च स्वामिना लब्धः शेषांशं षट्कं सूत्रे एव प्रोक्तं तदा मौक्तिकानां संख्या केति प्रश्नः।

अपरञ्च, उत्तरम=30

**पद्माक्ष्या प्रियकल्पिनाद् वसुलवा भूषा ललाटीकृता,**
**यच्छेषात् त्रिगुणाद्रि भागरचिता न्यस्तास्तानान्तः स्रजि।**
**शेषार्धं भुजनालयोर्मणिगणः शेषाब्धिकस्त्र्यहतः,**
**काञ्च्यात्मामणिराशिचामाशु वद मे वेण्यां हि यत् षोडश॥**[3]

1. तत्रैव श्लो. 6
2. तत्रैव श्लो. 1
3. श्लो.4 द्वीष्टकर्म

अर्थात् कयाचित् कमलाक्ष्या प्रियप्राप्तमणीनामष्टमांशः स्वललाटे, त्रिगुणितशेषसप्तमांशस्तनयोरन्तः प्रदेशे, शेषार्धं मणिबन्धयोः, त्रिगुणितशेष- चतुर्थांशः कटिप्रदेशे, षोडशवेण्यां धारितास्तदा कियतीमणिसंख्येति वद। अत्र काञ्चिन्मणिभूषितां पद्मिनी पदभागिनीमालक्ष्य प्रश्नोपस्थापनं कृतमिति ज्ञायते। वस्तुतस्तु गणितजन्यं यत्काठिन्यं तत्सरलीकृतमलंकृतञ्च भास्करेण। उत्तरम् = 256

अपरञ्च,

**बाले! मरालगुलमूदलानि सप्त तीरे विलासमरगन्धरगाण्यपश्यम्।**
**कुर्वच्च केलिकलहं कलहं सयुग्मं शेषे जले वद मरालकुलप्रमाणम्।।**

अर्थाद् हे बाले! हंससमूहवर्गमूलस्य सप्तगुणितस्यार्धं क्रीडाश्रमशैथिल्यान्मन्दं मन्दं गच्छन्तमहमपश्यम्। शेषं हंसयुगलं क्रीडाकलहं कुर्वन्तं जलेऽपश्यम्। तर्हि हंससमूहप्रमाणं किमिति प्रश्नः?

अत्र लकारलालित्यगुणोपेतं बालोचिद् गणितप्रश्नमुपस्थाप्य यादृशं सरलं सूक्ष्मेक्षणं भास्करेण प्रादर्शितं तदनुपममेव।

उत्तरम् = 16

अन्यच्च,

**यातं हंसकुलस्य मूलदशकं मेघागमे मानसं,**
**प्रोड्डीय स्थलपद्मिनीवनमगादष्टांशकोऽम्भस्तटात्।**
**बाले! बालमृणालशालिनि जले केलिक्रियालालसं,**
**दृष्टं हंसयुगत्रयं च सकलां यूथस्य संख्यां वद।।**

अर्थाद् हे बाले! वर्षर्त्तौ हंससमूहस्य दशगुणितं मूलं मानसं, तदष्टमांशः स्थलकमलिनीवनं गतः। तथा च हंसानां त्रियुगलं केलिक्रियालालसायुतं तत्रैव कोमलमृणालशोभिते जले दृष्टम्। तदा सकलां संख्यां वदेति बालावबोधाय प्रश्न उपस्थापितः। अत्रापि लकार श्रीः शोभते। कोमलकान्तपदावली च रसागमभावना सहिता प्रमोदं प्रयच्छति।

उत्तरम् 154

अन्यच्च,

**अलिकुलदलमूलं मालतीं यातमष्टौ,**
**निखिलनवमभागश्चालिनी भृङ्गमेकम्।**
**निशि परिमललुब्धं पद्ममध्ये निबद्धं,**
**प्रतिरणति रणन्तं ब्रूहि कान्तेऽलिसंख्यम्।।**

हे कान्ते। भ्रमरसमूहस्यार्द्धमूलं तथा निखिलभ्रमरस्याष्टगुणितो- नवमांशश्च मालतीलता पुष्पाणि प्रति अगात्। एका अलिनी, निशि परिमललोलुपं पद्ममध्ये निबद्धं रणनां भृङ्गमेकं प्रति रणति

1. तत्रैव, व्यस्तविधिः श्लो. 1

तदा भ्रमरसंख्यां ब्रूहीति प्रश्ने परिमलामोद प्रियाणां भ्रमराणां संख्याज्ञानं कथं भवेदिति संक्षिप्ताक्षरकोमलामलपदैर्भास्करेण चित्रितम्।[1] उत्तरम् 72

अन्यच्च,

इतिहासबोधच्छलेन वीररसवर्णनं कुर्वता भास्करेणोदाहृतं यथा–

**पार्थः कर्णवधाय मार्गणगणं क्रुद्धो रणे सन्दग्धे,**
**तस्यार्धेन निवार्य तच्छरगणं मूलैश्चतुर्भिर्हयान्।**
**शल्यं षड्भी रथेषुभिस्त्रिभिरपिच्छत्रं ध्वजं कार्मुकं,**
**चिच्छेदास्य शिरः शरेण कति ते यानर्जुनः सन्दधे।।"[2]**

भास्कराचार्यरचनासु बहुत्र लकारावृत्तिर्माधुर्य जननीति कथने नास्ति संशीतिलेशः। साहित्यदृष्ट्या भास्कररचितग्रन्थेषु पदलालित्यं श्लेषालंकार– शोभा चाऽद्वितीयाऽस्ति। अत्रापि 2 लवर्णयोरभेदत्वं स्वीकृत्य विचार्यते तदा सुस्पष्टमेव तथ्यमिदं, यदेकत्र बह्निबीजात्मकानां रेफवर्णानां तथा च पृथ्वीतत्त्वात्मकानां लकराणामपूर्वं चित्रं दृश्यते काव्यकुशलैः।

ऋतुवर्णनप्रसङ्गेन–

**मदनदहनखिन्नामागतेऽप्येत्यकाले**
**परिमलबहलानां मालतीनां नदीनाम्।**
**अदयदयितसिञ्चस्याऽऽत्मदृग्वारिणा किं**
**परिमलबहलानां मालतीनां न दीनाम्।।[3]**

**वर्षाकाले हृदयस्य मदयं दयितं**
**प्रति विरहिणी किलेवं ब्रूते।**
**सरसमभिलपन्ती सत्कवीनां विदग्धा-**
**ऽनवरत रमणीया भारती कामिनार्थम्।**
**न हरति हृदयं वा कस्य सा सानुरागा**
**नवरत रमणी या भारती कामितार्थम्।।[4]**

अत्रायं भावः स्फुटो जायते यल्लक्षणलक्षितकाव्यनिर्मापकानां सत्कीनां काव्यसम्बन्धि वाणी अर्थाद् भारती कस्य हृदयं सादरश्रवणनिमित्तं न हरति अर्थाद् हरत्येवेति काक्वर्थः।

**त्रिदिवमधरयन्तस्तीर पङ्केन नान्त-**
**रुचि रसिकतया वाश्लेषिताङ्गैः सुवृतैः।**

1. ली. व्यस्तविधौ श्लो. 3
2. तत्रैव श्लो. 5
3. सि. शिरोमणौ गोलाध्याये ऋतुवर्णनाध्याये श्लो. 5
4. तत्रैव श्लो. 13

**कृतिन इह रमन्ते रम्यसारस्वतौधे**
**रुचिर रसिकतया वा श्लेषिताङ्गैः सुवृतैः।।**[1]

इत्यादि वचनामृतेन साहित्य रसमाधुर्यमास्वाद्यं स्वयंसिद्धम्। कथितं च भास्करेण–

**ऋतुव्यावर्णनव्याजादीषदेषा प्रदर्शिता।**
**कविता तद्विदां प्रीत्यै रसिकानां मनोहरा।।** इति

ज्योतिषविषये भास्करेण अनुप्रासप्रियता सर्वत्र दर्शिता शृङ्गोन्नत्यधिकारे चन्द्रमसो वर्णनं कुर्वन् कथयति यथा–

**तरणिकिरणसङ्गादेष पीयूषपिण्डो,**
**दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति।**
**तदितरदिशि बाला कुन्तल श्यामलश्री–**
**र्घट इव निजमूर्तिच्छाययैवाऽऽतपस्थः।।**

सूर्यकिरणैश्चन्द्रो प्रकाशितो भवतीति ज्योतिषशास्त्रे प्रसिद्धः। तदर्धः सूर्यसम्मुखभागः समुज्ज्वलस्तत् पृष्ठस्य भागोऽनुज्ज्वलो भवति। तद्वर्णनमेवोक्त पद्येऽनुप्रासोपमाभिः कृतम्।

लीलावतीति ग्रन्थस्यान्ते भास्करो श्लेषालंकारविभूषितेन पद्येन निवेदयति यथा–

**येषां सुजातिगुणवर्गविभूषिताङ्गी**
**शुद्धाखिला व्यवहृतिः खलु कण्ठसक्ता।**
**लीलावतीह सरसोक्तिमुदाहरन्ती**
**तेषां सदैव सुखसम्पदुपैति वृद्धिम्।।**

सिद्धान्तशिरौमणौ चान्ते कथयति यथा–

**प्रश्नानमून् प्रपठतो गणकस्य गोल–**
**कन्दोल्लसत्सरल युक्तिशतप्रबालैः।**
**प्रश्नोत्तरार्थ परिचिन्तनवारिसिक्त–**
**मूलामला मतिलता समुपैतिवृद्धिम्।**

इत्यत्र "मङ्गलादीनि मङ्गलान्तानि च शास्त्राण्यलङ्कार कृतां मतान्यतो वृद्धिपदेन ग्रन्थसमाप्तिं कुर्वतो भास्करस्य विषये नाधिकं किमपि वक्तुं पारयेऽल्पधीधनत्वात्। अत एव संक्षिप्ततमे ऽस्मिन्निबन्धान्ते ऽहमपि निवेदयामि यद् भास्करीयसिद्धान्तशिरोमणिर्वस्तुतः शिरोमणिरिव राजते। साहित्यरस– सुधाप्लुता विचारचातुरीचतुरालालित्यपदललिता लीलावती लीलावतीव जागर्ति लोके। बीजगणितं बुद्धेः कलाकौशलं नवीनरचना चातुर्यं वाक्सुधास्फीतं चैशपदवीं धत्ते। इति शम्

1. तत्रैव श्लो. 15

# ज्योतिषशास्त्रे विद्यारम्भमुहूर्तसमीक्षा

**श्रीकपिलदेवः**

वेदा एव विद्यायाः मूलाधारा इति तु निश्चप्रचम्। वैदिकवाङ्मयं हि विश्ववाङ्मयसमुदाये मूर्द्धन्यमिति न सम्भवति कस्याऽपि विमतिः। अस्य हि विस्तृतं सुसमृद्धञ्च सर्वाङ्गपूर्णं कलेवरं सर्वानपि विस्मापयतीति नैवात्युक्तिः। वेदाः हि गूढार्थयुक्ताः दुर्बोधगम्याश्चेत्यतः

वेदार्थज्ञानाय षड्वेदाङ्गानां जनिरभूत्। यथोच्यते –

**शिक्षा कल्पो व्याकरणं, निरुक्तं छन्दसां चयः।**
**ज्योतिषामयनं चैव, वेदाङ्गानि षडेव तु॥**[1]

यया मोक्षाधिगमः सैव विद्या। उपनिषत्सु सैव परा विद्येति प्रकीर्त्यते। अत एव भूयो भूयो निर्दिश्यते **'सा विद्या या विमुक्तये'** विद्यैव ज्ञानावाप्ति साधनम् 'ऋते ज्ञानान्न मुक्तिः'।

सर्वदोषविनाशनाज्ज्ञानाग्निसन्दीपनाद् ब्रह्मतत्त्वसाधनात् पावनत्वसंचाराज्ज्ञानमेव मानवीयं कलेवरं दैवत्वं प्राप्नोति । नहि लोके ज्ञानात् प्रशस्यतमं पावनतमम् उत्कृष्टं वा किञ्चित्।

श्रीकृष्णेनोक्तम् –

**'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते'**[2]

पावनत्वगुणप्रकर्षादेव ज्ञानस्य महिमानम् उदीरयताऽभिधीयते पावनत्वगुणोत्कर्षादेव विद्या देववत् पूज्यते आद्रियते च। सा देववत् पन्थानं प्रथयति, सृतिं सारयति, मार्गं मार्गयते, धियं द्योतयति, मेधां समेधयति, प्रज्ञां प्रज्वालयति, बुद्धिं प्रबोधयति, चेतश्चेतयते, स्वान्तं संस्कुरुते वैभवम् आविर्भावयति च।

**विद्यां चाविद्यां च यस्तद्वेदोन्नयं सह।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥**[3]

विद्यायाः परमं लक्ष्यं विद्यते भौतिक सुखसाधनेन सममेव पापावलेपनिरसनपुरः सरं मुक्तेः संसाधनम्। यदि न स्याद् विद्या मुक्तेः साधनं तर्हि तदवाप्तिरपि न श्रेयसे न च सुखाय स्यात्।

1. भारतीय ज्योतिष प्रथमोऽध्याय पृष्ठ 5
2. गीता 4/38
3. ईशा. श्लो. 11, यजुर्वेद 40/14

कार्तिकशुक्लैकादशीपर्यन्तम्) परित्यज्य, षष्ठी-प्रतिपदा-अष्टमी-रिक्ता तिथयः अमावस्याञ्च वर्जयित्वा शनि-भौमवासरं त्यक्त्वा श्रेष्ठशुभावसरे विद्यारम्भः करणीयः।

**विद्यारम्भे कालशुद्धिः -**

विद्यारम्भमूहूर्तार्थं इन्द्रादिदेवानां दिवसकालं (उत्तरायणकालं) श्रेष्ठं भवति। गुरु शुक्रस्य चोदये काले विद्यारम्भः यशज्ञानवैभवदायको भवति। यथोक्तम्-

**शाखापरिवृढपूज्योशनसामुदये ह्युपलब्ध्यै सततं स्यात्।**
**वागर्थिन इह भाषा यशसे विद्यारम्भोऽमरवरदिवसे।।**[1]
**कश्चिदुपक्रममाह महर्षिर्देवशयनवत्कालमपास्य।**
**विद्यायाः क्षितिसुरविभुवर्षे काव्यगुरूदयकालसमेते।।**[2]

विद्यारम्भकालविषये केचन महर्षयः मन्यन्त्रे विष्णुशयनकालं (आषाढशुक्लैकादशीतः कार्तिकशुक्लैकादशीपर्यन्तम्) त्यक्त्वा गुरु शुक्रोदयकाले विद्यारम्भो शुभदो भवति।

**विद्यारम्भदिनानि -**

**पक्षद्वितयगताखिलघस्रैर्विष्टिकुयोगगलग्रहमुक्तैः ।**
**सन्ततमिह किल विद्यारम्भः सर्वागमकृतसिद्धिप्रदः स्यात्।।**[3]

भद्राशुभयोग-गलग्रहनामकदोषरहितदिवसेषु पक्षद्वये विद्यारम्भः सिद्धिदायको भवति।

**विद्यारम्भवासराः -**

**पर्जन्यार्चितपविदुशनसामाहुरहानि वराण्यभिरूपाः।**
**विद्याया विधुमिहिरदिने वारम्भे क्वचिदनसौम्यफलेऽस्मिन्।।**[4]

विद्यारम्भे पण्डिताः गुरु-बुध-भृगुवासरा उत्तमत्त्वेन स्वीक्रियन्ते तथा च केषाञ्चित् आचार्याणामनुसारेण सोमवासरः रविवासरश्च विद्यारम्भे शुभफलदायकौ भवति।

**विद्यारम्भनक्षत्राणि -**

**नक्तञ्चरपुष्करविधुशर्क्षैस्त्वष्ट्रजपत्पन्नगभगभादयैः ।**
**लोललघूडुसमेतैरखिलो विद्यारम्भः सुमतिभिरूदितः।।**[5]

---

1. ज्योर्विदाभरणे अ. 9 श्लो. 2
2. ज्योर्विदाभरणे अ. 9 श्लो. 3
3. ज्योर्विदाभरणे अ. 9 श्लो. 4
4. ज्योर्विदाभरणे अ. 9 श्लो. 6
5. ज्योर्विदाभरणे अ. 9 श्लो. 5

मूल-कृतिका-अश्विनी-आर्द्रा-पुष्य-मृगशीर्ष-हस्त-रेवतीनक्षत्रेषु गणितारम्भमुहूर्तः प्रशस्तः।

**वेदधर्मशास्त्रव्याकरणादिशास्त्राणाम्मुहूर्तः -**

**नयेच्छब्दशास्त्रागमारम्भकालं कृतीशेमुषीशोशनोविद्दिनेषु।**
**चलक्षिप्रमैत्रोडुशैवाश्रितेषु त्वितो धर्मशास्त्रादिकारब्धिकालम्॥**[1]

शब्दशास्त्र-(व्याकरण)धर्मशास्त्रस्य -वेदस्य च शुभारम्भः बृहस्पति-शुक्र-बुधवासरेषु च चरसंज्ञक-क्षिप्रसंज्ञक-मैत्रसंज्ञक(स्वाती-पुनर्वसु-श्रवण-धनिष्ठा-शतभिषा-हस्त-अश्विनी-पुष्य-अभिजित्-मृगशिरा-रेवती-चित्रा-अनुराधा) आर्द्रा नक्षत्रेषु च शुभो भवति।

**दर्शनशास्त्रस्य मुहूर्तः -**

**त्रियुग्मीश्रवोयुग्मभैः सद्ग्रहाणां समारम्भितं सांख्यशास्त्रादिशास्त्रम्।**
**मृदुक्षिप्रशम्भूडुशम्भूडुयुक्तैर्दिनेष्वेव तद्बोधसिद्धिं तनोति॥**[2]

पूर्वात्रयो-उत्तरात्रयो-श्रवण-धनिष्ठा-मृदुसंज्ञकेषु (मृगशीर्ष-रेवती-चित्रा-अनुराधा) क्षिप्रसंज्ञकः (हस्त-अश्विनी-पुष्य-अभिजित्) आर्द्रा-रोहिणीनक्षत्रेषु सोम-बुध-गुरु-शुक्रवासरेषु च दर्शनशास्त्राध्ययनार्थं मुहूर्तः शुभो भवति।

**धनुर्वेदविद्यामुहूर्तः -**

**सशर्वाभगाश्वीन्द्वजेज्याम्बुपर्क्षे शयादिन्दुसारङ्गदृक्सप्तकञ्च।**
**कवीनारवारानभिज्ञा वदेयुर्धनुर्वेदविद्यासमारम्भकाले॥**[3]

आर्द्रा-श्रवण-पूर्वाषाढा-पूर्वाफाल्गुनि-अश्विनी-मृगशीर्ष-रोहिणी-पुष्य-शतभिषा-

हस्त-चित्रा-विशाखा-अनुराधा-ज्येष्ठा-मूलनक्षत्रेषु च शुक्र-रवि-भौमवासरेषु धनुर्विद्या प्रशस्ता भवति।

**चिकित्साशास्त्रमुहूर्तः -**

**मृदुक्षिप्रतीक्ष्णाख्यलोलोडुवर्गे तमिस्राभियातीन्द्वसृग्वासरेषु।**
**सदा दोषविच्छास्त्रविद्या निरैन्द्रे तथारम्भयेद्गारूडं कर्म सर्वम्॥**[4]

---

1. ज्योर्विदाभरणे अ. 9 श्लो. 13
2. ज्योर्विदाभरणे अ. 9 श्लो. 14
3. ज्योर्विदाभरणे अ. 9 श्लो. 15
4. ज्योर्विदाभरणे अ. 9 श्लो. 16

अनध्यायदिवसान् परित्यज्य शेषदिवसेषु स्थिर-चर-क्षिप्रसंज्ञकेषु (उत्तराभाद्रपद्-उत्तराषाढा-उत्तराफाल्गुनी-रोहिणी-स्वाती-पुनर्वसु-श्रवण-घनिष्ठा-शतभिषा-हस्त-अश्विनी-पुष्य-अभिजित्)-मृगशीर्ष-आर्द्रानक्षत्रेषु शुक्र-गुरु-बुध-रवि-चन्द्रवासरेषु शिल्पविद्यारम्भः श्रेष्ठो भवति। अत एव विद्याक्षेत्रे पूर्णसाफल्यप्राप्तये मुहूर्तानुस्गुणमेव विद्यारम्भः करणीयः। यतोहि -

**मातेव रक्षति पितेव हिते नियुङ्क्ते**
**कान्तेव चाभिरमयत्यपयनीय खेदम्।**
**लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं**
**किं किं न साधयति कल्पलतेव विद्या॥**[1]

1. भोजप्रबन्ध 5

# 'सन्दर्भेषु दशरूपकं श्रेयः' इत्यस्य प्राच्यपाश्चात्त्यमतसमीक्षणम्

**डॉ. सुमनकुमारझाः**

**आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम्।**
**आहार्यं चन्द्रतारादि तं नुमः सात्त्विकं शिवम्॥**[1]

संस्कृतसाहित्यस्य विविधासु विधासु रूपकविधा सर्वोत्कृष्टा सर्वलोकानुरञ्जिनी सर्वजनमनोग्राहिणी च विद्यते, चतुर्विधाभिनयप्रधानत्वात्, लोकोपयोगित्वात्, लोकप्रमाणत्वात्, लोकवृत्तव्यवहारवर्णनत्वात्, लोकस्वभावानुकरणत्वात्, भावमनोहारिचित्रणत्वात्, सर्वजनबोधगम्यत्वात्, साक्षादिन्द्रियप्रत्यक्षत्वाच्च। प्रबन्धेषु रूपकस्यापूर्वत्वं, श्रेष्ठत्वं, सर्वजनप्रभावकारित्वं च सुविदितमेव विदुषाम्। समग्रसंस्कृतसाहित्ये नाट्यसाहित्यस्य वैशिष्ट्यं सर्वथा प्रथितमेव। तत्र दशरूपकाणि, अष्टादश चोपरूपकाणि प्रसिद्धानि सन्ति। **'नाट्यं हि भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्' 'नाटकान्तं कवित्वम्' 'सन्दर्भेषु दशरूपकं श्रेयः' 'काव्येषु नाटकं रम्यमि'**त्यादीन्याभाणकानि सुप्रसिद्धानि सन्ति। संस्कृतस्य रूपकसाहित्यम् विशालं व्यापकं वैविध्यपूर्णं नानारूपात्मकं च। अत एव प्रबन्धेषु नाट्यं सर्वश्रेष्ठमिति सर्वात्मना स्वीक्रियते प्राच्यपाश्चात्यसमीक्षकैः, कविभिः, शास्त्रकारैश्च।

वस्तुतः सहृदयहृदयाह्लादकारिलोकोत्तरवर्णनमेव काव्यमिति काव्यस्य सामान्यस्वरूपमुच्यते। रसानुभूतिर्लोकोत्तरानन्दप्राप्तिश्च नाम काव्यस्य परमं प्रयोजनम्। साहित्यशास्त्रीयाचार्यैर्बुधैश्च काव्यस्य मीमांसा बहुधा कृताऽस्ति। **तत्र रमणीयार्थप्रतिपादकौ शब्दार्थौ काव्यमिति मे मतिः।** यतः साहित्ये द्वयोरेव सन्निवेशः। यत्र शब्दनिष्ठसौन्दर्यमर्थनिष्ठसौन्दर्यञ्च तुल्यकक्षं भवति तत्रैव साहित्यं सुप्रतिष्ठितं भवति।

साहित्यं नाम जीवनस्य विशिष्टम् चित्रणं समालोचनञ्च। साहित्ये समग्रं लोकजीवनं सामाजिकजीवनञ्च प्रतिबिम्बितं प्रतिफलितञ्च भवति। वस्तुतो लोकाद् बहि किमपि नास्ति, सर्वं लोक एव प्रतिष्ठितं भवति। अतो लोकस्य लोकजीवनस्य च प्रतिफलनमेव साहित्यमिति। तत्रापि नाट्यसाहित्ये तु लोकस्य महत्त्वं सर्वथा प्रथितमेव। तत्र लोकः प्रमाणत्वेनाङ्गीक्रियते। यथा चोच्यते भरतमुनिना–

---

1. सङ्गीतरत्नाकरग्रन्थस्य मङ्गलपद्यम्।

**लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्।**
**लोकाध्यात्मपदार्थेषु प्रायो नाट्यं व्यवस्थितम्।।**[1]

**नाट्यशास्त्रे तु बहुशो लोकस्य चर्चा प्राप्यते। यथा-**

**नोक्ता येऽपि तु तेऽप्यत्र लोकाद्ग्राह्यास्तु पण्डितैः।**[1]
**लोकसिद्धं भवेत्सिद्धं नाट्यं लोकात्मकं त्विदम्।।**[2]

**यानि शास्त्राणि ये धर्मा यानि शिल्पानि याः क्रियाः।**
**लोकधर्मप्रवृत्तानि नाट्यमित्यभिसंज्ञितम् ।।**[4]

**नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम्।**
**तस्माल्लोकप्रमाणं हि ज्ञेयं नाट्यप्रयोक्तृभिः।।**[5]

वस्तुतः काव्येषु लोकस्य महत्त्वं सर्वथा स्वीक्रियत एव, यतः काव्यं लोकाश्रितं भवति। अत एव नाट्यशास्त्रे द्विविधा परम्परा स्वीकृता- लोकधर्मिपरम्परा नाट्यधर्मिपरम्परा च। द्विधेयं परम्परा संस्कृतनाट्यग्रन्थेषु पूर्णरूपेण परिलक्ष्यते। नाट्यं लोकानुसारेण शास्त्रानुसारेण च प्रवर्तते। यथा- **लोकशास्त्रानुसारेण तस्मान्नाट्यं प्रवर्तते।**[6] नाट्ये लोकवृत्तमाश्रित्य नैके भावाः सुखदुःखसमन्विता लोकस्वभावा विविधविषयाश्च वर्ण्यन्ते। यथा चोच्यते मुनिना-

**नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम्।**
**लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्।।**[7]

**योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः।**
**सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते।।**[8]

**किं बहुना, नाट्ये तु त्रैलोक्यस्यास्य सर्वे भावा अनुकीर्त्यन्ते। यथा-**

**त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम्।**[9]

---

1. ना0शा0-25/112
2. नाट्यशास्त्रम्-25-118,121
3. तत्रैव-25-123
4. तत्रैव, 25-127।
5. तत्रेव, 25-129।
6. तत्रैव, 5-165।
7. ना.शा.-1/112
8. ना.शा.-1/119
9. तत्रैव-1/107

वामनाचार्येणापि **लोको विद्या प्रकीर्णञ्च काव्याङ्गानि** इत्युक्तम्।[1] राजशेखरेणापि प्रोक्तम्-

**कविवचनायत्ता च लोकयात्रा। सा च निःश्रेयसमूलम्।**[2]

साहित्ये प्रतिफलितं जीवनं न कस्यचनैकस्य जनस्यापितु समग्र-समाजस्य राष्ट्रस्य विश्वस्यापि भवति। वस्तुतः साहित्ये चराचरात्मकं (स्थावरजङ्गमात्मकं) समग्रं विश्वमेव निरूपयति चित्रयति च साहित्यकारः। अर्थात् साहित्ये स्थावरजङ्गमात्मकस्य लोकवृत्तस्य वर्णनं समुपलभ्यते। अतः साहित्य-जीवनयोः कश्चन विशिष्ट एव सम्बन्धः, येन परस्परमनयोः सिद्धिः सम्प्रवर्तते। यथा चोच्यत आधुनिकै राधावल्लभत्रिपाठिभिः -

**साहित्ये जीवनं सर्वं सर्वाङ्गीणं नवं नवम्।**
**प्रतिबिम्बत्वमायाति समुल्लसति वर्धते।।**

**अद्भुतः प्रतिबिम्बोऽयं बिम्बमेव विभावयन्।**
**संस्कुर्वन् जीवनं तस्मिन् समवेतो नवायते।।**

**जीवने चास्ति साहित्यं साहित्ये जीवनं तथा।**
**परस्परकृता सिद्धिरनयोः सम्प्रवर्तते।।**[3]

आधिभौतिकाधिदैविकाध्यात्मिकभेदेन जीवनं त्रिधा। एतत्त्रिविधमपि जीवनं संस्कृतकाव्येषु विलक्षणतया चित्रितमस्ति। तत्रापि रूपकसाहित्ये त्वेतस्य मनोहारिचित्रणं समुपलभ्यते।

रसभावादीनां विमर्शकस्य, सहृदयहृदयानामाह्लादकस्य, अपारकाव्यसंसारप्रजापतेः, प्राक्तनाद्यतनजन्मसंस्कार- (प्राक्तनी इदानीन्तनी च वासना) परिपाकप्रौढ्या कवित्वबीजरूपया नवनवोन्मेष-शालिन्या प्रतिभया सम्पन्नस्य, चारुचमत्कारजनकलोकोत्तरवर्णनानिपुणस्य च कवेर्नियतिकृतनियमरहितं ह्लादैकमयम् अनन्यपरतन्त्रं नवरसरुचिरं नवनवनिर्माणरूपञ्च कर्म एव काव्यम्।

### दृश्यकाव्यस्य स्वरूपम्-

तच्च काव्यं दृश्यश्रव्यत्वभेदेन द्विविधं मतम्। यथा हि- **दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्।**[4] तत्राभिनेयं काव्यं दृश्यम्। इदमेव चाङ्गिकवाचिकाहार्यसात्त्विकरूपैश्चतुर्भिरभिनयैः काव्योपनिबद्धधीरोदात्तत्वादिविशिष्टरामादिनायकानामवस्थाया नटद्वारा तादात्म्यापत्तिरूपतया **'नाट्यम्' इत्युच्यते।** इदम् हि नाट्यं नीलपीतादिरूपवद् दृश्यतया रूपमिति कथ्यते। तस्य च रूपस्य नट आरोपात् तदेव रूपं **'रूपक'मित्युच्यते।** इदं हि रूपकं दशविधतया **'दशरूपकमि'ति** कथ्यते ।

---

1. का0सू0- 1/3/1
2. काव्यमीमांसा-षष्ठोऽध्यायः।
3. अभिनवकाव्यालङ्कारसूत्रम्-1/1 पृ0/18
4. साहित्यदर्पणः-6/1

उक्तं हि दशरूपककृता धनञ्जयेन–

**अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते।**
**रूपकं तत्समारोपाद् दशधैव रसाश्रयम्॥**[1]

**नाटकं सप्रकरणं भाणः प्रहसनं डिमः।**
**व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति॥**[2]

अत्र चोच्यते **धनिकेन अवलोकटीकायाम्**– नाटकादि च रसविषयम्, रसस्य च पदार्थीभूतविभावादिकसंसर्गात्मकवाक्यार्थहेतुकत्वाद्वाक्यार्थाभिनयात्मकत्वं रसाश्रयमित्यनेन दर्शितम्। नाट्यमिति च 'नट अवस्पन्दने' इति नटेः किञ्चिच्चलनार्थत्वात्सात्त्विकबाहुल्यम्, अत एव तत्कारिषु नटव्यपदेशः।'[3]

**आचार्यभामहः पञ्चविधं काव्यं** निरूपयति। तत्र रूपकस्य कृतेऽभिनेयार्थमिति प्रयुक्तः। यथा–

**सर्गबन्धोऽभिनेयार्थं तथैवाख्यायिकाकथे ।**
**अनिबद्धञ्च काव्यादि तत्पुनः पञ्चधोच्यते॥**[4]

**आचार्यदण्डिना दृश्यकाव्यस्य कृते मिश्राणि प्रेक्षार्थञ्च प्रयुक्तौ।** यथा– **मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः। लास्यच्छलितशम्पादि प्रेक्षार्थम् इतरत् पुनः॥**[5]

रूपकमेव प्रेक्ष्यकाव्यनाम्नाऽपि ज्ञायते। यथा **चोच्यते भोजराजेन, प्रबन्धश्चेह द्विधा- प्रेक्ष्यः, श्रव्यश्च। तयोरभिनयः प्रेक्ष्यः।** स च नाटकादिभेदाच्चतुर्विंशतिप्रकारो भवति।[6]

**आचार्यहेमचन्द्रेणाप्युच्यते– अथ प्रबन्धात्मकान्काव्यभेदानाह– काव्यं प्रेक्ष्यं श्रव्यं च। प्रेक्ष्यमभिनेयम्। प्रेक्ष्यमपि पाठ्यं गेयं च नाम्ना द्विधा विभजते।** तत्र पाठ्यं नाटकप्रकरण-नाटिकासमवकारेहामृगडिमव्यायोगोत्सृष्टिकाङ्कप्रहसनभाणवीथीसट्टकादि।[7] गेयं विभजते–गेयं डोम्बिकाभाणप्रस्थानशिङ्गभाणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठीश्रीगदितरागकाव्यादि।[8]

**नाट्यस्वरूपविषये उक्तं** शारदातनयेन नाट्यशास्त्रीयग्रन्थे भावप्रकाशने–

---

1. दशरूपकम्–1/7
2. तत्रैव–1/7
2. दशरूपकावलोकटीका– 1/9
4. काव्यालङ्कारः–1/18
5. काव्यादर्शः– 1/31, 39
6. शृङ्गारप्रकाशः–11/पृ.– 659
7. काव्यानुशासनम्– अष्टमोऽध्यायः, पृ./379
8. तत्रैव–पृ. 391

**अवस्थानुकृतिर्नाट्यमिति सामान्यलक्षणम्।**
**रामादितादात्म्यापत्तिर्नटे या नाट्यमुच्यते।**

**रूपकं तद्भवेद्रूपं दृश्यत्वात्प्रेक्षकैरिदम्॥**
**रूपकत्वं तदारोपात्कमलारोपवन्मुखे।**[1]

**शारदातनयानुसारं रूपकं त्रिंशद्विधं भवति।** यथा-

**'नाटकं सप्रकरणं भाणः प्रहसनं डिमः।**
**व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति।**
**तोटकं नाटिका गोष्ठी सल्लापः शिल्पकन्तथा॥**
**डोम्बी श्रीगदितं भाणी प्रस्थानं काव्यमेव च।**
**प्रेक्षकं सट्टकं नाट्यरासकं लासकं तथा॥**
**उल्लोप्यकञ्च हल्लीसमथ दुर्मल्लिकाऽपि च।**
**मल्लिका कल्पवल्ली च पारिजातकमित्यपि॥**
**रसात्मका दशैतेषु विंशद्भावात्मका मताः।**
**तेषां रूपकसंज्ञाऽपि प्रायो दृश्यतया क्वचित्॥**
**त्रिंशद्रूपकभेदाश्च प्रकाश्यन्तेऽत्र लक्षणैः।**[2]

आचार्यविश्वनाथेन तु दशरूपकाणि अष्टादश चोपरूपकाणि प्रतिपादितानि। प्रतिपादितं च नाट्यस्वरूपम्, यथा-

**दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम्।**[3]

**वस्तुभेदान्नायकभेदाद् रसभेदाद्रूपाणामन्योन्यं भेद इति। यथा चोच्यते-**

**वस्तु नेता रसस्तेषां भेदकः।**[4]

एतस्य च दृश्यात्मकस्य दशरूपकस्य श्रव्यकाव्यापेक्षया श्रेयस्त्वं प्रतिपादयता **काव्यालङ्कार-सूत्रकृता वामनाचार्येण**- **'सन्दर्भेषु दशरूपकं श्रेयः'** इति स्वसूत्रं व्याचक्षाणेन तद्वृत्तौ स्पष्टतयोक्तं वामनेन **'सन्दर्भेषु प्रबन्धेषु दशरूपकं नाटकादि श्रेयः'** इति ।

तत्रैव च प्रतिपादितम् एतस्य कारणद्वयम्। यथा- 1. **तद्धि चित्रं चित्रपटवद् विशेषसाकल्यात्'** इति। यतो दशरूपकं रीति-वस्तु-विन्यासादि-समस्त-विशेषैर्युक्तं भवति अतश्चित्रपटवच्चित्ररूपम्

---

1. भावप्रकाशनम्- सप्तमोऽधिकारः-1,2
2. भावप्रकाशनम्- अष्टमोऽधिकारः-का.सं./2,3
3. साहित्यदर्पणः-6/ 1,3,4,5,6
4. दशरूपकम्-1/11

आश्चर्यजनकम् आनन्ददायकं वा भवति। यथा च चित्रं विभिन्नरङ्गसंमिश्रणेन सहृदयदर्शकानां चित्तं रसमयं करोति तथैव नाटकादि दशरूपकं चतुर्विधाभिनयैः सहृदय-सामाजिकानां मानसमाह्लादयतीत्यर्थः।

2. '**ततोऽन्यभेदक्लृप्तिः**'- इति च दशरूपकस्य श्रेयस्त्वे द्वितीयं कारणम्। अर्थात् ततो दशरूपकादेव कथाख्यायिकामहाकाव्यादिप्रबन्धभेदानां कल्पनम्। अतो दशरूपकस्यैव महाकाव्यादिसर्वं विलसितम्। अतएव सन्दर्भेषु दशरूपकं श्रेय इति वामनाचार्यमतम्।

**इदमत्र विमर्शनम्** - श्रव्यं हि काव्यं श्रवणपथेन हृदयमाकर्षयति, दृश्यं च काव्यं चाक्षुषप्रत्यक्षेण चेतश्चमत्करोति। दर्शनजन्य आनन्दः श्रवणजन्यादानन्दान्महीयानित्यत्र सहृदयहृदयमेव साक्षि। अन्यच्च दृश्यकाव्ये दर्शनजन्यानन्देन सह वाचिकाभिनयद्वारा सम्पादितश्रवणजन्यानन्दोऽपि भवत्येव। श्रव्यकाव्ये रसानुभूतिः पदार्थवाक्यार्थपरिशीलनविशदीकृतमानसानां सहृदयानामेव भवति, दृश्यकाव्ये तु तथाविध-पद-पदार्थ-ज्ञान-रहितानामपि सवासनानां सभ्यानां रसास्वादो भवत्येव। तत्र प्राधान्येन श्रवणपदवीं प्राप्य सचेतसां हृदयावर्जकं काव्यं श्रव्यमिति कथ्यते। दर्शकानां सहृदयसामाजिकानां नेत्रानन्दविधायकं सहृदयहृदयावर्जकं काव्यं दृश्यमित्युच्यते। श्रव्यकाव्यं श्रोतव्यमात्रम्।[1]

दृश्यकाव्ये तु यच्छ्रूयते तस्य दर्शनमपि जायते। श्रवणतो दर्शनं वरमिति प्रसिद्धम्। इदं दृश्यकाव्यमभिनेयं भवति। अभिनेतुं योग्यमभिनेयमिति व्युत्पत्त्यनुसारेण नटादिभिरभिनीयमानं नायकादीनां चरितमेवाभिनयमुच्यते। एतदभिनयमेव नटेषु रामादिनायकानां स्वरूपारोपणाद् रूपकमित्यभिधीयते।

अन्यच्च श्रव्यकाव्ये रसानुभूत्यै यादृक्-कवित्वमय-सरस-पदार्थवर्णनस्यावश्यकत्वं तस्य निर्माणे न सर्वे समर्था अपितु कतिपये प्रतिभावन्तः कल्पनाशीलाः शारदाकृपाकटाक्षभाजः सहृदया एव। अत एव श्रव्यकाव्ये रसास्वादका अपि विरला एव सहृदयाः। दृश्यकाव्ये तादृश-रसमय-भावभूमेः प्रकाशनं संविधानकैर्भवति अतः सामाजिकेभ्यः तादृशकल्पनाया अनावश्यकतया साधारणा अपि सवासना रसास्वादभाजो भवन्ति। तत्र रसानुभूत्यै स्वयमेव विभावानुभावव्यभिचारिसात्त्विकभावसंयोगवर्णनं समुपस्थितं भवति। वस्तुतः श्रव्यकाव्यापेक्षया दृश्यकाव्येऽधिकतरं रमणीयत्वमास्वाद्यते। यतस्तत्रालौकिककलाकौशलेनाभिनयनैपुण्येन पूर्वरङ्गविधानेन प्रदर्शितनाट्यावलोकनेनैव नायकनायिकादीनां नटानां सर्वोऽपि भावः सामाजिकानां चेतःसु साक्षादङ्कितो भूत्वा सद्यो रसानुभूतिविषयो भवति। श्रव्यकाव्ये तु यद्यदनुभूयते श्रवणसाहाय्येन तत्सर्वं सूक्ष्मातिसूक्ष्मप्रयासेनैव सहृदयैरनुभूयतेऽतः श्रव्यकाव्यापेक्षया दृश्यकाव्यस्य चारुत्वं सुतरां सिद्धम्। नाट्यं वीक्ष्य साधारणजनोऽपि परमानन्दं प्राप्नोति तदा सहृदयानां तु कथैव का? अस्मिंश्च नाट्ये किमपि तादृशं वस्तु नास्ति यन्नोपलभ्यते। अत एव भरतमुनिना प्रोक्तम्-

**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।**

---

1. श्रव्यं तत्काव्यमाहुर्यन्नेक्ष्यते नाभिनीयते। श्रोत्रयोरेव सुखदं भवेत्तदपि षड्विधम्।।
   सरस्वतीकण्ठाभरणम्-द्वितीयपरिच्छेदः, का.सं./140

**न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते॥**
**सर्वशास्त्राणि शिल्पानि कर्माणि विविधानि च।**
**अस्मिन्नाट्ये समेतानि तस्मादेतन्मया कृतम् ॥**[1]

इत्येवं कथयता तेन नाट्यस्य महत्त्वं प्रख्यापितम्। नाट्यस्य प्रयोजनं प्रतिपादयता तेनैव प्रोक्तम्–

**दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।**
**विश्रामजननं लोके नाट्यमेतद् भविष्यति॥**
**धर्म्यं यशस्यमायुष्यं हितं बुद्धि–विवर्धनम्।**
**लोकोपदेशजननं नाट्यमेतद् भविष्यति॥**[2]

इत्येवंरूपेण नाट्यमपि चतुर्वर्गफलप्रापकं सुखादेव अल्पधियां कृतेऽभूत्। अतो नाट्यं काव्यान्महत्तरम्। नाट्यस्य सर्वजनमनोग्राहित्वमपि निरूप्यते भरतमुनिना, यथा–

**यो यस्य दयितो भावः स तं नाट्ये निरीक्षते।**
**अतः सर्वमनोग्राहि नाट्यं कस्य न वल्लभम्॥**

**धर्मादिसाधनं नाट्यं सर्वदुःखापनोदकृत्।**
**अर्थमेषध्वमृषयस्तस्यात्मानं तु नाटकम्॥**

**चतुर्वेदसमुद्भूतं रसाभिनयपूर्वकम्।**
**धर्म्यमर्थ्यं यशस्यं च नाट्यं को नाभिनन्दति॥**

एतन्नाट्यं खलु उत्तमाधममध्यमानां सर्वेषामपि लोकानां हितं साधयति प्रचुरमानन्दं चातनोति। यथा–

**उत्तमाधममध्यानां नराणां कर्मसंश्रयम्।**
**हितोपदेशजननं धृतिक्रीडासुखादिकृत्॥**[3]

नाट्येऽस्मिन् सर्वे रसा भावादयश्च निरूप्यन्ते। तत्र क्वचिद् धर्मो वर्ण्यते, क्वचित्क्रीडा, क्वचिदर्थः, क्वचिच्छमः, क्वचिच्च कामः, क्वचिद्वेदविद्या क्वचिदैतिह्यं क्वचिदाख्यानपरिकल्पनं क्वचिदाचारशिक्षा क्वचिच्च विनोदविन्यासो निरूप्यते। यथा चोच्यते मुनिना–

---

1. नाट्यशास्त्रम्– 1/114, 115
2. तत्रैव–1/112, 113
3. ना.शा.–1/113

**क्वचिद्धर्मः क्वचित्क्रीडा क्वचिदर्थः क्वचिच्छमः।**
**क्वचिद् हास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः॥[1]**

**वेदविद्येतिहासानामाख्यानपरिकल्पनम्।**
**विनोदकरणं लोके नाट्यमेतद् भविष्यति॥**

**श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम्।**
**विनोदजननं लोके नाट्यमेतद् भविष्यति॥[2]**

अस्मान्नाट्याद् यस्य यादृश्यभिरूचिः स तादृशीमेव सामग्रीमुपलभते। अत्र धर्मोपदेशो विषयोप-भोगचर्चा ज्ञानं विलास उत्साहादयश्च सर्वविषयाः समुपलभ्यन्ते । यथा-

**धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम्।**
**निग्रहो दुर्विनीतानां विनीतानां दमक्रिया॥**

**क्लीबानां धाष्ट्र्यजननमुत्साहः शूरमानिनाम्।**
**अबुधानां विबोधश्च वैदुष्यं विदुषामपि॥**

**ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च।**
**अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम्॥[3]**

नाट्यस्य महत्त्वं प्रतिपादयता कविता-कामिनी-विलासेन महाकविकालिदासेन प्रोक्तम्- न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम्। तथाहि-

**देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं,**
**रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।**
**त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते,**
**नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्॥[4]**

यतो नाट्यमपि देवानां कृते शान्तिमयश्चाक्षुषो यज्ञः, यतश्च अर्धनारीश्वरेण शिवेन स्वीयाङ्ग एव लास्य-ताण्डवरूपेण नाट्यस्य द्विधा विभागः कृतः, यतश्च सत्त्वरजस्तमोगुणात्मकं लोकचरितं शृङ्गारादिकनानारसमयमत्र दृश्यते , अतो नाट्यमेव प्राय एकमीदृशं वस्तु यत्र सर्वेषां भिन्नरुचीनां जनानां समाराधनं भवति। अत एव प्रारम्भादेव काव्यजगतीदमाभाणकं प्रसिद्धम्- **काव्येषु नाटकं रम्यम्।**

---

1. तत्रैव- 1/108
2. तत्रैव-1/122,123
3. ना.शा.-1/ 109,110,111
4. मालविकाग्निमित्रम्- 1/4

अभिनवगुप्तपादाचार्येणोच्यते नाट्यवैशिष्ट्यसन्दर्भे– **तदेवं नाट्यादिरूपकोपक्रमं गीतातोद्य-प्राणाभिनयवर्गपरिपुष्यद्रसचर्वणात्मकं परप्रीतिमयमेव नाट्यम्। तत्र नाट्यं नाम लौकिक-पदार्थव्यतिरिक्तं तदनुकारप्रतिबिम्बालेख्यसादृश्यारोपाध्यवसायोत्प्रेक्षास्वप्नमायेन्द्रजालादिविलक्षणं तद्ग्राहकस्य सम्यग्ज्ञानभ्रान्तिसंशयानवधारणानध्यवसायविज्ञानभिन्नवृत्तान्तास्वादनरूपसंवेदनसंवेद्यं वस्तु रसस्वभावमिति।**[1]

अलङ्कारशास्त्रस्यैतिहासिकदृष्ट्या पर्यालोचनेन काव्यनाट्ययोः परस्परसम्बन्धे तयोस्तारतम्ये च त्रयः पक्षाः प्रत्यक्षगोचरीभवन्ति।

1. तत्रैकस्मिन् पक्षे नाट्यस्यैव प्राधान्यम्, **तस्यैव विलसितानि महाकाव्यादीन्यन्यानि। अत एव भरतमुनिना नाट्यशास्त्रमेव प्रणीतम्। तस्यैव च प्राधान्यं प्रदर्शितम्। आचार्यवामनेनापि तदेवानुसृतम्। अतः 'सन्दर्भेषु दशरूपकं श्रेयः' इत्युक्तम्। नाट्यशास्त्रस्य व्याख्याकृता अभिनवगुप्तपादाचार्येण–' काव्यं तावन्मुख्यतो दशरूपात्मकमेव' इत्येवं मन्यमानेन दशरूपकस्य श्रेयस्त्वं प्रकटितम्।**

2. द्वितीयस्मिन् पक्षे दशरूपकाद् भिन्नस्य महाकाव्यादेः स्वतन्त्रमस्तित्वं वैशिष्ट्यञ्च। **सन्दर्भेऽस्मिन् भामह–दण्ड्युद्भट–रुद्रटादीनामाचार्याणामभिमतं प्रमाणभूतमस्ति। एतन्मतस्य प्रतिपादनं कुर्वाणेन भोजराजेन मुक्तकण्ठं प्रकटितम्–** 'अतोऽभिनेतृभ्यः कवीनेव बहुमन्यामहेऽ–भिनयेभ्यश्च काव्यमिति।'

3. तृतीयस्मिन् पक्षे महाकाव्यस्यैवाङ्गतया दशरूपकस्य विवेचनं भवति। अत एव– 'साहित्यदर्पण–प्रतापरुद्रयशोभूषणा'दौ प्राधान्येन काव्यस्याङ्गतया नाट्यस्यापि विवेचनमुपलभ्यते ।

**सन्दर्भेऽस्मिन् पाश्चात्त्यकाव्यशास्त्रीयं मतम्–**

पाश्चात्त्यसाहित्यसमीक्षाशास्त्रेऽपि प्राचीनकालादेव काव्यनाट्ययोस्तारतम्यसम्बन्धी विचारः समुपलभ्यते। अरस्तूमहोदयेन स्वकीये काव्यशास्त्रे त्रासदी–महाकाव्ययोस्तारतम्यं विचारयता निर्भ्रान्तं यत्र–तत्र त्रासद्या उत्कृष्टतरं रूपं प्रतिपादितम्। अनुकरणात्मककलाया महाकाव्यमपि भव्यं रूपं किन्तु तन्मते त्रासदी तत्कलाया भव्यतररूपा। महाकाव्ये वैशिष्ट्यप्रतिपादकं यद् यद् वस्तु तत्सर्वं त्रासद्यामुपलभ्यते। किन्तु त्रासद्यां यद् यद् वर्तते तत्सर्वं न महाकाव्ये समुपलभ्यते। एतदेव त्रासद्या महत्तरं रूपं प्रतिपादयता अरस्तूमहोदयेन उक्तम्–

1. त्रासद्यां महाकाव्यस्य निखिलानि तत्त्वानि विद्यमानानि सन्ति। महाकाव्यस्य वृत्तस्यापि प्रयोगस्त्रासद्यां भवितुमर्हति।

2. त्रासद्याः सङ्गीत–रङ्गप्रभावात्मकमतिरिक्तं महत्वपूर्ण–सहायकतत्त्वं यत्र सर्वाधिक–प्रत्यक्षानन्दसृष्टिर्भवति।

1. अभिनवभारतीटीका–1/का.सं.–1,16

3. अभिनये पाठे च तस्याः प्रभावातिशयो दृश्यते।

4. महाकाव्यापेक्षया त्रासद्या अन्वितिः सुदृढतरा भवति।

5. महाकाव्यस्य विस्तृत-कालपटे विक्षिप्ततरलप्रभावापेक्षया त्रासद्याः सुसंहितसघन-प्रभावोऽधिकआह्लादकारी भवति। महाकाव्यापेक्षया त्रासदी कलात्मकरूपे स्वीयलक्ष्यपूर्तिम् अर्थात् विशिष्टकलागतानन्द-सृष्टिम् अधिकसाफल्येन करोति। अस्माद्धेतोः त्रासदी महाकाव्यापेक्षया कलाया उत्कृष्टतरं रूपम्।

**अतो**ऽरस्तूमहोदयस्य मतेऽपि नाट्यस्य श्रेष्ठत्वं स्पष्टमेव। **इदमत्र विज्ञेयं यत्-पाश्चात्त्यकाव्यशास्त्रे नाट्यस्य यत्** 'त्रासदी-कामदी'**ति नामकं भेदद्वयं वर्तते तत्र त्रासदी एव उत्कृष्टतरा, यतः त्रासद्या लक्ष्यम्- 1. त्रासकरुणयोरुद्बोधनम्, कामद्यास्तु हर्षस्य हासस्य वा उद्बोधनम्। 2. त्रासद्या लक्ष्यं मानवजीवनस्य भव्यतरं चित्रणम्, कामद्यास्तु लक्ष्यं मानवस्य यथार्थजीवनापेक्षया हीनतरं चित्रणम्। त्रासद्या लक्षणमेव तस्या उत्कृष्टतररूपप्रतिपादकम् अतस्तस्याः स्वरूप-प्रतिपादनमपि नात्र अनावश्यकम्। यथा-**

**'**त्रासदी कस्यचित् गम्भीरस्य, स्वतःपूर्णस्य निश्चितायाम-युक्तस्य कार्यस्यानुकृतिः, यस्याः माध्यमं नाटकस्य विभिन्नभागेषु विभिन्नरूपेण प्रयुक्ता सर्वविधालङ्कारैरलंकृता भाषा भवति , या न समाख्यानरूपा, अपितु कार्यव्यापाररूपा भवति, यत्र च त्रासकरुणयोरुद्रेकद्वारा मनोविकाराणां समुचितविरेचनं भवति ।'

**एतल्लक्षणानुसारेण- 1. त्रासदी कार्यस्यानुकृतेर्नाम। 2. इदं कार्यं स्वतःपूर्णं तथा निश्चितायामकं भवति। 3. अस्य कार्यस्य समाख्यानं वर्णनं वा न भवति अपितु प्रदर्शनं भवति। 4. भाषाच्छन्दो-लय-गीतादिभिरलंकृता भवति। 5. त्रासकरुणयोरुद्रेकद्वारा तादृशमनोविकाराणां विरेचनेन आनन्दानुभूतिः त्रासद्या उद्देश्यं भवति। अस्माद्धेतोः त्रासद्या अनिवार्यरूपेण षडङ्गानि भवन्ति। यथा-** 1. कथानकम् 2. चरित्रचित्रणम् 3. पदरचना 4. विचारतत्त्वम् 5. दृश्यविधानम् 6. गीतञ्च। **एतेषु कथानकं, चरित्रचित्रणं, विचारतत्त्वं चानुकृतेर्विषयः, दृश्यविधानम् अनुकृतेर्माध्यमम्, पद-रचना गीतं चानुकरणस्य विधिः। अत एव अरस्तूमहोदयेन प्रतिपादितम्-**

'महाकाव्ये यानि वस्तूनि तानि सर्वाणि त्रासद्यामुपलभ्यन्ते, किन्तु त्रासद्यां यानि तत्त्वानि, न तानि सर्वाणि महाकाव्य उपलभ्यन्ते।' अतो महाकाव्यापेक्षया नाट्यं श्रेय इति निश्चितं तन्मतम्।

यद्यपि महाकाव्ये यादृशो विस्तरः, यादृशं वैविध्यं यादृशं च प्रभाव-गुरुत्वं समुपलभ्यते, न तथा त्रासद्यां, यतो हि देशकालादिबन्धनराहित्येन महाकाव्यस्य सीमायां जीवनस्यापार-विस्तरः समायाति यो हि विस्तरो देशकालादिबन्धनसहितायां त्रासद्यां न भवितुमर्हति। एवमेव महाकाव्य उपाख्यानस्य विविधता विचित्रता च निर्बाधरूपेण भवति या हि त्रासद्यां न भवितुमर्हति तत्र घटनैक्यस्य नियमतः

परिपालनात्। एवमेव च विस्तर-वैविध्ययोः परिणामस्वरूपं यादृशं प्रभाव-गौरवं महाकाव्ये भवितुमर्हति न तथा त्रासद्यां, तत्र हि तादृशविस्तर-वैविध्ययोरभावात् , तथापि न्यूनाधिकरूपेण इमान्यपि त्रासद्यामुपलभ्यन्त एव, परं यानि तत्त्वानि गीताभिनयदृश्यविधानादीनि नाट्येषु प्राप्यन्ते तानि महाकाव्ये नह्येव मिलन्ति, अतो नाट्यस्य श्रेयस्त्वमक्षुण्णम्।

**एतेन नाट्यस्य श्रेयस्त्वं सर्वथा प्रतिपादितमेव। इदमत्रानुसन्धेयम्- भरतमुनिना नाट्यशास्त्रे** 'न हि रसादृते कश्चिदप्यर्थः प्रवर्तते ' **इति प्रतिपादयता नाट्यस्य रस एव प्राणतत्त्वमिति निश्चितम्। रसस्य वास्तविकसम्बन्धः सरलतया तस्यानुभूतिश्च नाट्य एव, यतो विभावानुभावव्यभिचारिणां प्रत्यक्षरूपेण यथा प्रस्तुतिर्नाट्ये भवति न तथा श्रव्यकाव्ये। अतो रस-सम्बन्धेनापि नाट्यस्य श्रेयस्त्वं सर्वथाऽक्षुण्णम्। अत एव 'अभिनवभारत्याम् अभिनवगुप्तपादाचार्येण प्रोक्तम्-**

नाट्याद् रसः नाट्यरसः। नाट्यमेव रसः नाट्यरसः । नाट्यात्समुदायरूपाद्रसाः। यदि वा नाट्यमेव रसाः। रससमुदायो हि नाट्यम्। नाट्य एव च रसाः। काव्येऽपि नाट्यायमान एव रसः। काव्यार्थविषये हि प्रत्यक्षकल्पसंवेदनोदये रसोदय इत्युपाध्यायाः। **यदाहुः 'काव्यकौतुके-**

**प्रयोगत्वमनापन्ने काव्ये नास्वादसंभवः।**
**वर्णनोत्कलिताभोगप्रौढोक्त्या सम्यगर्पिताः।**
**उद्यानकान्ताचन्द्राद्या भावाः प्रत्यक्षवत्स्फुटाः॥** इति

अन्ये तु काव्येऽपि गुणालङ्कारसौन्दर्यातिशयकृतं रसचर्वणमाहुः। वयं तु ब्रूमः- काव्यं तावन्मुख्यतो दशरूपात्मकमेव। तत एवोच्यते- 'सन्दर्भेषु दशरूपकम्' इति। यत्तु दशरूपकं तस्य योऽर्थस्तदेव नाट्यम्। तेन नाट्य एव रसाः। काव्यञ्च नाट्यमेव।[1]

इदमत्र विवेचनीयम्- काव्यान्नाट्यस्य श्रेयस्त्वं युक्तियुक्तम्, उताहो नाट्यं प्रति पक्षपातमूलकम्। यत् सङ्गीत-रङ्गविधानादि केवलं नाट्य एव दृश्यते न श्रव्यकाव्ये तत्तु नाट्यस्यापि केवलं बाह्यप्रसाधनम्, यतः सङ्गीतादेरप्यधिकविनियोगेन वैरस्यमेव जायत इत्यत्र सहृदयानुभव एव साक्षी । अतोऽन्तरङ्गतत्त्वं तु तत्रापि रसविनियोग एव। एवञ्च सद्यः परनिर्वृतिः नाट्य-काव्ययो परमं लक्ष्यं समानम्। यद्यपि भरतमुनिः धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनं लोकोपदेशजननं नाट्यममन्यत तथापि सद्य आनन्दनिष्यन्द एव नाट्यस्य परमं प्रयोजनमिति धनञ्जयप्रभृतयोऽमन्यत । तथाहि-

**आनन्दनिस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः।**
**योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय॥**[2]

अतः काव्यनाट्ययोः परमं प्रयोजनं रसास्वाद एवेति निर्विवादम्। रसास्वादे तु क्वापि भेदो

1. अ.भा.टीका-6/33/पृ.288-289
2. दशरूपकम्- 1/6

नास्ति। स तु आस्वाद: सर्वत्र समान एव। तदा किंमूलकं तारतम्यमिति विचारणायाम् आस्वादस्य मात्रा स्थायित्वञ्च इत्येव तारतम्यस्य कारणद्वयं समायाति। एवञ्च मात्रां तथा च स्थायित्वमाधारीकृत्य रसास्वादस्य तारतम्यविचारे नाट्यकाव्ययोरानन्दानुभवे व्यावहारिकभेद: समुपलभ्यते।

**दशरूपके अरस्तूमहोदयस्य त्रासद्यां वा सघन-तीव्रानन्दास्वादो भवति, महाकाव्ये च स्थायिन उदात्तस्य आनन्दस्यास्वादो भवति। एवं हि रुचीनां वैचित्र्याद् यो हि सघन-तीव्रानन्दमुत्कृष्टं मन्यते तस्य कृते नाट्यमेव श्रेय: । यो हि स्थाय्युदात्तानन्दमेव उत्कृष्टं मनुते तस्य कृते महाकाव्यमेव श्रेय: । इदमेव च रहस्यं यत् कस्मैश्चित् सहृदयाय नाट्यदर्शनमेव रोचते, कस्मैचिच्च सहृदयाय काव्यमननमेव। चतुर्वर्गफलप्राप्तिकाव्यामृतरसास्वादरूपपर-निर्वृत्योरन्तश्चमत्काररूपपरनिर्वृतेरधिककाम्यतया तस्य चान्तश्चमत्कारस्य साधुसम्पादनं सर्वेषां कृते यथा दशरूपकेण भवति न तथा महाकाव्येनेति मत्वैव** 'सन्दर्भेषु दशरूपकं श्रेय' इति मतं प्रसिद्धम्।

परन्तु येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता तेषां सहृदय-संवादभाजां सहृदयानां काव्यरसास्वादाधिकारिणां कतिपयकाव्यविदां कृते महाकाव्यमेव श्रेयो यतो हि महाकाव्यस्य रसानुभव एव प्रचुरता, उदात्तता, स्थायिता च ।

पाश्चात्त्यकाव्यशास्त्रे त्रासद्यां त्रासकरुणात्मकस्य वृत्तिद्वयस्यैव केवलं समञ्जनं प्रशमनं वा भवति महाकाव्ये तु मानव-मानस-स्थित-समस्त-समविषमवृत्तीनां समञ्जनं भवति। अतो महाकाव्येन समुत्पादितस्य सामञ्जस्याधिकपूर्णत्वमधिकं च स्थायित्वम्। एवञ्च पाश्चात्त्यकाव्यसमालोचकानां रिचर्ड्सप्रभृतीनां मतेऽपि महाकाव्यस्य श्रेयस्त्वम्।

वस्तुत: काव्य-नाट्ययो: कतरच्छ्रेय इत्यस्य निर्णयोऽधिकारिभेदेनैव कर्तुं शक्यत इति मे मति:। यथा चोच्यते अभिनवगुप्तपादाचार्येण अभिनवभारत्याम्-

तत्र ये स्वभावतो निर्मलमुकुरहृदयास्त एव संसारोचितक्रोधमोहाभिलाषपरवशमनसो न भवन्ति। तेषां तथाविधदशरूपकाकर्णनसमये साधारणरसनात्मकचर्वणग्राह्यो रससञ्चयो नाट्यलक्षण: स्फुट एव। ये त्वतथाभूतास्तेषां प्रत्यक्षोचित-तथाविधचर्वणालाभाय नटादिप्रक्रिया। स्वगतक्रोध-शोकादिसङ्कटहृदयग्रन्थिभञ्जनाय गीतादिप्रक्रिया च मुनिना विरचिता। तेन नाट्य एव रसा:। काव्यञ्च नाट्यमेव। इति।[1]

वस्तुत: काव्यसमीक्षणस्य पक्षद्वयं भवति- कविपक्ष: सामाजिकपक्षश्च, अथवा कारकपक्षो भावकपक्षश्च। सारस्वत-तत्त्वस्य एतदेवोपकरणद्वयं विद्यते। कवि: स्वप्रातिभचक्षुषा अदृष्टपूर्वतत्त्वानि साक्षात्कृत्य स्वशब्दतूलिकया काव्यत्वेन निरूपयति, उन्मीलयति च। सहृदय: स्व-भावयित्रीप्रतिभयैतस्य शब्दार्थमयचित्रणस्यान्तर्निहितमानन्दं स्वसंस्कारेण (वासनया) अनुभवति। अत एवोच्यते अभिनवगुप्तेन-

1. अभिनवभारतीटीका-षष्ठोऽध्याय:/का.सं./33, पृ.289

**अपूर्वं यद्वस्तु प्रथयति विना कारणकलां,**
**जगद्ग्रावप्रख्यं निजरसभरात्सारयति च।**
**क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति तत्,**
**सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते।।**[1]

अनेनोभयविधपक्षेण रूपकमन्यकाव्यभेदेषु श्रेयः। कारयित्री-प्रतिभायाः यावान् चमत्कारो रूपके दृश्यते, भावयित्री-प्रतिभायाः तावानेव प्रभावस्तत्र स्पष्टतरो भवति। रसवत्तादृष्ट्या, रसास्वादोत्कर्षदृष्ट्या च रूपकं श्रव्यकाव्यापेक्षया निःसन्देहं, सुतरां च मनोज्ञं भवति। रसवत्तापूर्त्तेः चरमदृष्टान्तो रूपकम्। औचित्याश्रया भवति रसवत्ता। यस्यां रचनायां यावान् औचित्यपरिपाकः संलक्ष्यते सा रचना तावानेव रसपेशलत्वं धारयति। औचित्यस्य समधिकमवलम्बनं नाट्ये परिलक्ष्यते। अर्थात् औचित्यनिर्वाहेण एव प्रवर्तते नाट्यम्। उच्यते च मुनिना-

**वयोऽनुरूपः प्रथमस्तु वेषः वेषानुरूपश्च गतिप्रचारः।**
**गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः।।**[2]

**नाट्येष्वौचित्यनिर्वाहस्य समुचिता परम्परा दृश्यते, अनया औचित्यपरम्परया तत्र रसवत्ता पूर्णरूपेण विद्यमाना भवति। यथा** चोच्यतेऽभिनवगुप्तपादाचार्येण-

**तत्र नाट्ये ह्युचितैर्भाषावृत्तिकाकुनेपथ्यप्रभृतिभिः पूर्यते च रसवत्ता।**
**सर्गबन्धादौ तु नायिकाया अपि संस्कृतैवोक्तिरिति बहुतरमनुचितम्।**[3]

**अत एवोच्यते काव्यं तावन्मुख्यतो दशरूपात्मकमेव।**

काव्यस्य प्रधानलक्ष्यमस्ति-सामाजिकानां चेतःसु रसोन्मेषः। तत्र सहृदयचर्वणा आवश्यकी । रसप्रतीतये सहृदयसामाजिको नितान्त आवश्यकः। यथा चोच्यते-

येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते स्वहृदयसंवादभाजः सहृदयाः। यथोक्तम्-

**योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः।**
**शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना।।**[4]

वस्तुतो ये सहृदया भवन्ति ते स्व-भावयित्रीप्रतिभावशात् सर्वं कल्पयन्ति। यथा चोच्यते-

तथा च तत्र सहृदयाः पूर्वापरमुचितं परिकल्प्य ईदृगत्र वक्तास्मिन्नवसरे इत्यादि बहुतरं

1. लोचनटीकायाः मङ्गलपद्यम्।
2. ना.शा.-14/68
3. अभिनवभारती- षष्ठोऽध्यायः/पृ.-289
4. ध्वन्यालोकलोचनम्- प्रथमोद्योतः-पृ./40

पीठबन्धरूपं विदधते। तेन ये काव्याभ्यासप्राक्तनपुण्यादिहेतुबलादिति सहृदयास्तेषां परिमितविभावाद्यु-न्मीलनेऽपि परिस्फुट एव साक्षात्कारकल्पः काव्यार्थः स्फुरति। अत एव तेषां काव्यमेव प्रतीव्युत्पत्तिकृदनपेक्षितनाट्यमपि।[1]

**परन्तु प्रसङ्गवशात् तादृशानां सहृदयानामपि हृदयः चिन्तोद्वेगेन विक्षिप्तो भवति। हृदयोद्वेगेन रूपकस्य पठनेन श्रवणेनापि रसास्वादो न जायते, इदृग्दशायां तेभ्योऽप्यभिनयस्य विपुलमनोरञ्जनसामग्री अपेक्ष्यत एव । यथा च-** तेषामपि तु नाट्यं 'निपतिताः स्फुरिताः शशिरश्मयः' इति न्यायेन सुतरां निर्मलीकरणम्। अहृदयानां तु नैर्मल्याधायि।[2]

**यदि सहृदयानामप्येषा स्थितिः, तदा असहृदयानां तु का कथा ? तेषां रसबोधाय नाट्यस्य भूयसी आवश्यकता वर्तते। असहृदयस्य सहृदयत्वेन परिणतौ सर्वप्रधानसाधनमस्ति नाट्यम्। नाट्येनासहृदयोऽपि सहृदयः सञ्जायते। यथा चोच्यते- अभिनवगुप्तपादाचार्येण-**

'निजसुखादिविवशीभूतश्च कथं वस्त्वन्तरे संविदं विश्रामयेदिति तद्रूपप्रत्यूहव्यपोहनाय प्रतिपदार्थनिष्ठैः साधारण्यमहिम्ना सकलभोग्यत्वसहिष्णुभिः शब्दादिविषयमयैरातोद्यगान-विचित्रमण्डप-विदग्धगणिकादिभिरुपरञ्जनं समाश्रितं, येनाहृदयोऽपि सहृदयवैमल्यप्राप्त्या सहृदयीक्रियते।[3]

उपर्युक्तपर्यालोचनेन निर्णीयते यत्-नाट्येषु पूर्वरङ्गविधानाद्, अभिनयप्रदर्शनाद्, वेशभूषाद्यलंकरणात्, प्राकृतिकदृश्यसंयोजनात्, आङ्गिकवाचिकाहार्यसात्त्विकाभिनयसंमिश्रणात्, नृत्यगीतसङ्गीतलास्यविलासात्, न केवलं सचेतसामेव रसास्वादो मनस्तोषश्च, अपितु आबालवृद्धं शिक्षितानामशिक्षितानां नराणां नारीणां चानन्दावाप्तिर्मनोरञ्जनं च। नाट्यं सुखदुःखाद्यनुभूतिप्रधानं भवति। अतः खिन्नचेतोविनोदाय नाट्यं श्रेष्ठं साधनम्। नाट्यं विषण्णस्य विषादापहम्, खिन्नस्य खेदापनोदनम्, आर्तस्यार्तिहरम्, आधिप्रपीडितस्य मानसिकोपचारः, उत्पीडितस्य मार्गप्रदर्शकं यथायथं सर्वेषामुपकारि च। श्रान्तचित्तविनोदनस्य नान्यः साधीयान् पन्थाः।

इत्थं साहित्यिक-कलात्मकानुभूतये, रसास्वादपूर्तये च सर्वविधकाव्यभेदेषु रूपकं सर्वश्रेष्ठं मन्यते, यतः तत्प्रभावो न केवलं सहृदयेष्वेव भवति, प्रत्युत समस्तजनेषु, (ते सहृदया भवन्तु, अहृदया वा) समभावत्वेन परापतति, परिदृश्यते वा। इत्थं सत्यानुभूतिदृष्ट्या, रसवत्तादृष्ट्या, स्निग्धत्वदृष्ट्या, रसास्वादनोत्कर्षेण, रसपेशलत्वदृष्ट्या च रूपकं काव्यभेदेषु सर्वथाभिरामं, हृदयङ्गमं, रमणीयं, हृदयावर्जकं, मनोज्ञं च वर्तते। इत्यलम् ।

1. अभिनवभारती-षष्ठोऽध्यायः-पृ./285
2. अभिनवभारती-6/पृ.-285
3. अभिनवभारती-6/पृ./280

# नैषधीयचरितमहाकाव्ये वीररससंयोजनविमर्शः

**डॉ. ज्ञानधरपाठकः**

समीक्षाशब्दस्यैवार्थः भवति सम्यगवलोकनं चतुर्दिक् निरीक्षणं परीक्षणञ्चानेनैव क्रमेणास्य नैषधीयचरितमहाकाव्यग्रन्थस्य समग्रावलोकनं कर्तुं न शक्यते भविष्यति च महत्कार्यं तथापि देशमेकं विचिन्त्यांगरसस्य वीरस्य समीक्षणं कर्तुमीहे। नैषधीयचरितमहाकाव्यस्य अंगीरसः श्रृंगारः विद्यते। वीरकरुणहास्यादि रसानां योजना अङ्गरूपे विद्यतो। अस्मिन् महाकाव्ये दमयन्तीस्वयंवरप्रसङ्गे वीररसस्य योजनायाः सुन्दरं प्रतिपादनं दरीदृश्यते। अत्र वीररसस्य आलम्बनं नैषधीयचरितस्य नायकः राजा नलः। समग्रमहाकाव्ये धर्मं प्रति, दीनान् प्रति, दानं प्रति, संग्रामं प्रति नलस्य हृदये यत्र-यत्र उत्साहस्य सञ्चारः अभवत् तत्र-तत्र वीररसस्य बीजानि प्रस्फुटितानि। एतस्मात् कारणाद् वीररसस्य दानवीरः धर्मवीरः युद्धवीरः दयावीरश्च इति भेदानाम् एकस्मिन् महाकाव्ये समायोजनं परिलक्षितं भवति। पञ्चमसर्गे नलस्य ध्यानविषयोक्तोत्साहस्य विशदव्यञ्जना प्राप्यते। अतः महाकवीना प्रधानरूपेण वीररसस्य दानवीरभेदस्य संयोजना कृता।

नलेन कृतं दानविषयकगभीरचिन्तनं महाकविः स्व-शब्दभावयोः संयोगेन साकाररूपं प्रदत्तवान्। दानस्य अवसरोपलब्धिः सौभाग्यसूचिका इति दानश्रेष्ठतां प्रतिपाद्यता निगदितम्। अतः अनन्तगुणवता जन्मान्तरपर्यन्तञ्च प्रतिफलप्रदात्रा दानेन स्वजीवनम् अवश्यं सुवासितं कर्तव्यम्। याचकस्य इच्छानुकूलं प्रमोदभावेन च दत्तं दानम्, अनधिकृत वस्तुनोऽवदानं स्वस्तुतिं श्रोतुं च दाने विलम्बः न करणीयम्, यद्यावश्यकं दाने प्राणोत्सर्गमपि कर्तुं विनयपूर्वकं च दातुं तत्परैः भाव्यमिति नियमैः दानस्य सम्यक् स्वरूपवर्णनमस्ति। प्रथमसर्गे नलः धर्मवीरः शासकरूपेण निरूपितः तथा सप्तदशसर्गे प्रजाभिः सम्पादितधार्मिकानुष्ठानस्य विस्तृतविवेचनं विहितं। प्रारम्भे नलस्य गुणान् वर्णयन् श्रीहर्षः नलस्य युद्धवीरतायाः चित्रणमकरोत्। हंसं प्रति नलस्य दयाभावः तस्य दयावीरतायाः द्योतकः।

मुनिभरतेन वीररसस्य लक्षणं कृतं यत् ''वीरो नायकोत्तमप्रकृति- रुसाहात्मकः''[1] अर्थात् वीररसः उत्तमप्रकृतिजनानां उत्साहात्मकः चित्रवृत्तिरूपः। दशरूपककारः विभावानुभावव्यभिचारिस्थायिभावैः सार्धं वीररसस्य स्वरूपं प्रस्तुतवान्।

**वीरः प्रतापविनयाध्यवसायसत्त्व-**
**मोहाविषादनयविस्मयविक्रमाद्यैः।**

1. नाट्यशास्त्रे षष्ठाध्याये सप्तषष्टिश्लोकस्य पश्चात्

**उत्साहभूः स च दयारणदातयोगात्,**
**त्रेधा किलात्र मतिगर्वधृतिप्रहर्षाः।।**[1]

प्रतापविनयादिभावैः विभावितो भूत्वा दयारणदानादि-अनुभावैः अनुभावितं भूत्वा तथा गर्वधृतिहर्षामर्षस्मृतिमतिवितर्कादिव्यभिचारिभिः भूत्वा सम्पादितम् उत्साहनामकस्य स्थायिभावस्य वीररसरूपेण आस्वादनं भवति। तात्पर्यमस्ति यत् यः सहृदयानां चिन्तनं विस्तारयन् आनन्दं ददाति सः वीररसः।

वीररसस्य स्थायिभावः 'उत्साहः'। उत्साहस्य उत्पत्तेः निमित्तान्यालम्बनानि वा अनेकानि सन्ति। उत्साहात्मिका चित्तवृत्तिः वीररसस्य प्रमुखं आलम्बनम्भवति यथा प्रतिद्वन्द्विना युद्धाय उद्वेलिते रतिः शत्रून् पराजेतुम् उत्पन्ना चित्तवृत्तिः, दरिद्रजनानाम् अवस्थां दृष्ट्वा स्वर्णादि- प्रदानाय प्रकटिता चित्तवृत्तिः धर्मक्रियासु रुचिना तपयज्ञादे आराधनाय आर्तसत्वानां दुःखापहरणाय च या उत्साहात्मिका चित्तवृत्तिः। अतः वीररसस्य भेदानामेषा चिन्तवृत्तिः आधारः भवति।

एतान् अनुभावान् अवलम्ब्य मुनिः भरतः ब्रह्मोक्तान् दानवीरधर्मवीर- युद्धवीरश्चेति त्रिभेदान् आख्यायाति।[2] आचार्येण धनञ्जयेन दानवीरः - दयावीरः - युद्धवीरश्चेति त्रिभेदाः मन्यते।[3] साहित्यदर्पणकारः विश्वनाथः भरतधनञ्जययोः मन्तव्यानां समचितान् चतुरो भेदान् स्वीकरोति, यथोक्तम् "स च वीरो दानवीरो - धर्मवीरो - युद्धवीरो - दयावीरश्चेति चतुर्विधः" पश्चाद्वर्ति-आचार्येण जगन्नाथेनापि चत्वारो भेदाः स्वीक्रियन्ते। अन्यत्र सत्यवीर-पाण्डित्यवीरप्रभृतयः भेदा अपि क्रियन्ते।

महाकविः श्रीहर्षः नलस्य दानवीरतायाः समग्रतया चित्रणं कृतवान्। मेघसदृशः नलाधिपतिः दरिद्रेभ्यः याचनादधिकं धनं दत्वा तोषयतिस्म।

**दारिद्र्यदारिद्रविणौघवर्षैरमोघमेघव्रतमर्थिसार्थे।**
**संतुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम्।।**[4]

इत्थं अत्यधिकदानशीलः स इच्छितफलदायिनः कल्पवृक्षस्यापि यशः मलिनं करोतिस्म।

दानं प्रति नलस्य तत्परतायाः सङ्कल्पस्य च वर्णनं कवीना चमत्कारजन्यं विहितम्। यथा--

**विभज्य मेरुर्न यदर्थिसात्कृतो,**
**न सिन्धुरुतसर्गजलव्ययैर्मरुः।**
**अमानि तत्तेन निजायशोयुगं,**
**द्विफालबद्धाश्चिकुराः शिरःस्थितम्।।**[5]

1. दशरूपके 4.72
2. दानवीरं धर्मवीरं ...... नाट्यशास्त्रम् 6.79
3. साहित्यदर्पणः 3.234
4. नैषधीयचरितम् 3.25
5. नैषधीयचारितम् 1.16

राजा नलः अमन्यत् यत् स मेरुपर्वतस्य विभाजनं कृत्वा याचकेभ्यः वितरितुं नाशक्नोत् यथा जलप्रदानेन सागरोऽपि मरुर्न विहितः। अतः उभयतः द्विफालबद्धाः शिरसि स्थिताः कृष्णकेशाः मम द्वयोः अपयशसोः सूचकाः वर्तन्ते।

इत्थं प्रथमसर्गे कविनिबद्धप्रौढोक्त्या नलस्य उदारता प्रकटिता। अत्र दानवीररसस्य परिपाके याचकः आलम्बनविभावः, अनुकम्पायाः भावना उद्दीपनविभावः तथा उदारता वित्तत्यागश्च अनुभावाः सन्ति। दानेन सह प्रमोदभावः सञ्चारिभावोस्ति। इमं रसमास्वाद्य सहृदयानां चित्तवृत्तिः उदारभावेन परिपूर्णा सञ्जाता।

पञ्चमसर्गे इन्द्रादिदिक्पालानां याचकरूपेण उपस्थिते सति दानवीरस्य अत्यन्तमनोरमः साङ्गोपाङ्गश्च निरूपणमभवत् तत्र उत्साहस्य आश्रयः नलः, आलम्बनः देवगणः उद्दीपनः देवानां याचना अन्याः चेष्टाश्च तथा नलस्य रोमाञ्च प्रसन्नता मानसिकसंकल्पवचनादयः अनुभावः संचारी भावश्च स्तः।

इन्द्रप्रभृतयः देवाः दमयन्तीस्वयंवरं गच्छन्तः आसन्। तस्मिन् पथि स्वयंवरे प्रवेष्टारम् अत्यन्तरूपवन्तं नलं संप्रेक्ष्य दमयन्त्याः प्राप्तौ संशितिं गताः। तदा इन्द्रः कपटभावेन कथयति। ''भो नल! वयमर्थिनः सन्तस्त्वां निकषा याचकत्वेन प्राप्ताः स्मः''[1] दानशूरः स नलः अर्थिनं आगतं ज्ञात्वा रोमाञ्चितः हर्षितश्च। एषः भावः तस्य अन्यतमोत्साहस्य निदर्शनम्। तस्मिन्काले नलः चिन्तयति यत् एतेभ्यः दिगीश्वरेभ्यः किं दुर्लभं तथापि ममाधीनं किम्? इन्द्रस्य सन्तोषाय स प्राणादधिकं वस्तुदातुं तत्परः भवति। तच्च तस्य हृदि स्थिता दमयन्ती एवास्ति किन्तु अनधि- कृतत्वात् तस्या दानं कर्तुं न समर्थः।[2]

एतद् विचारयित्वा नलः इत्थं कथयति--

**जीवितावधि किमप्यधिकं वा यन्मनीषितमितो नरडिम्भात्।**
**तेन वश्चरणमर्चतु सोऽयं ब्रूत वस्तु पुनरस्तु किमीदृक्।।**[3]

एतेषु भावेषु दानं प्रति नलस्य अदम्योत्साह प्रकटीभवति। दमयन्तीं निकषा देवेन्द्रस्य विवाह-प्रस्तावं कथयिष्यति इति दानम् इन्द्रः नलं निवेदयति। नलः इन्द्रस्य वचनेषु निहितां कुटिलताम् अवलम्ब्य प्रथमं तावत् तस्य निन्दां करोति तथा पूतकर्मकर्तुम् असामर्थ्यं प्रकटयति।[4]

इन्द्रस्य छलभावं ज्ञात्वा नलोत्पनः दानविमुखतायाः भावः "मतिः" नामकं सञ्चारीभावे परिगणितः। अन्ते देवैः विभिन्नतर्कैः ज्ञापनं पुनः उत्साहस्य उद्दीपनं मंस्यते। येन नलः तां प्रार्थनां अङ्गीकृत्य पूर्णां करोति। इत्थं दानवीरस्य अविकलचित्रं द्रष्टुं प्राप्यते।

---

1. नैषधीयमहाकाव्यम् 5.77 टीकायाम्
2. नैषधीयमहाकाव्यम् 5.82
3. नैषधीयमहाकाव्यम् 5.97
4. नैषधीयमहाकाव्यम् 5.105

अस्मिन् सम्पूर्णप्रसंगे दानवीरनलस्य वैशिष्ट्यं अनेकत्र अभिव्यक्तं वर्तते, यथा–

1. नलस्य यशः चतुर्दिक्षु प्रसरति। अतः इष्टपूर्तिकारकः सुलभकल्पवृक्ष इन्द्रोऽपि नलस्य समक्षं यत्वते।[1]

2. याचकाय प्राणदानकर्त्ता नलः इन्द्रस्य परितोषाय प्राणादिकं वस्तु प्रदानाय चिन्तयति।[2]

3. नलस्य यशोगानं देवाधिपतिः इन्द्रोऽपि कृतवान्। यथा– "आसते शतमधिक्षिति भूपास्तोयराशिरसि ते खलु कूपाः"[3] अर्थात् भूतले शताधिकाः नृपाः सन्ति किन्तु गाम्भीर्योदार्यस्य आधिक्यात् त्वं अर्थात् नलः महासागरः अन्ये च कूपाः सन्ति।

**अर्थितां त्वयि गतेषु सुरेषु म्लानदानजनिजोरुयशःश्रीः।**
**अद्य पाण्डु गगनं सुरशाखी केवलेन कुसुमेन विधत्ताम्।।**[4]

अर्थात् कामनापूरकः कल्पवृक्षः यशःपुष्पेभ्यः गगनं शुभ्रं कृतवान् किन्तु अधुना स केवलेन कुसुमेन एव खं पाण्डुं विधास्यते, यतोहि नलेन सूराणां इच्छापूर्तितः कल्पवृक्षस्य दानजन्या विशालकीर्तिः म्लाना भविष्यति। अतः नलाधिपतिः जयति महादानी मंस्यते।

4. इन्द्रस्य कपटभावबोधनान्तरं नलेन दूतकर्मणो निषेधः कृतः, इति नीतिपूर्णनिर्णयः अस्ति, यतोहि कुटिलान् प्रति सरलतायाः भावः राजनीतिः नास्ति।[5] "शठे शाठ्यं समाचरेत्"

5. महर्षिदधीचिप्रभृतयः दातारः प्राणदानपर्यन्तं स्वदानं परिमितं कृतवन्तः किन्तु नलः तु प्राणाधिकां दमयन्तीं दातुं अचिन्तयत्। अतः महर्षेः नलस्य औदार्यभावः श्रेयस्करः।

अस्मिन् दानप्रकरणे दानस्वरूपं रेखांकितं विहितं, यथा–

1. संज्ञाशून्याः वृक्षादयः अपि फलपुष्पधात्वौषधरत्नानि इत्यादीनि वस्तूनि ददति। अतः चेतनायुक्ताः मानवाः तु जीवनदानं दत्वा अवश्यं स्वजीवनं सफलीभूतं कुर्युः अन्यथा तेषां भारैः पृथ्वीभारवती भवेत्।

**याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य।**
**तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः।।**[6]

कृपणतां लोभञ्च त्यक्त्वा मानवः मृत्युपूर्वमेव स्वधनस्य उपयोगं दाने कुर्यात्।

3. प्रायः ऋणी कुसीदं द्वित्रिगुणात् अधिकं दातुं समर्थो न भवति, किन्तु याचकाय ददाति। इदृशः उत्तम–ऋणगृहीता भाग्येन प्राप्यते। अतः सत्रान्ते अवश्यं दानं देयम्।

1. नैषधीयमहाकाव्यम् 5.80
2. नैषधीयमहाकाव्यम् 5.100
3. नैषधीयमहाकाव्यम् 5.133
4. नैषधीयमहाकाव्यम् 5.88
5. नैषधीयमहाकाव्यम् 5.91
6. नैषधीयमहाकाव्यम् 5.92

**लोक एष परलोकमुपेता हा विहाय निधने धनमकः।**
**इत्यमुं खलु तदस्य निनीषत्यर्थिबन्धुरुदयद्दयचित्तः॥**

4. दाने प्रदत्तं धनमेव परलोके जीवं वैभवं प्रापयति। अस्य शास्त्रवचनस्य उपेक्षयितुः पुरुषस्य धनं मृत्योः पश्चात् पुत्रबान्धवान् प्राप्नोति। बान्धवेभ्यः प्रदतं धनं पुण्यसंचयस्य हेतुर्नास्ति। इत्थं पुत्रपौत्रेभ्यः याचकबन्धुः श्रेष्ठः। अतः स्वोपार्जितस्य कश्चिदंशं याचकेभ्यः अवश्यं देयः।

5. दानं प्रमोदपूर्वकं दद्यात्।

6. जीवनं क्षणभंगुरमस्ति। अतएव मेधावीजनः अविलम्बं याचकस्य अभिलाषां पूरयति।

7. अनधिकृतवस्तुनः दानं न कुर्यात्।

8. स्त्रीपुत्रभ्यो दानं शास्त्रप्रतिकूलमस्ति।

9. प्रशंसावाप्तये दानकार्ये दीर्घसूत्रता पुण्यार्जनस्य स्थाने पापार्जनं कारयति। अतः शीघ्रातिशीघ्रं दानं श्रेयस्करम्।

10. दर्भेण सार्धं जलप्रदानस्याशयो वर्तते यद् धनदानेन सार्धं यथावसरं प्राणदानमपि करणीयम्।

श्रीहर्षः नलस्य दानवीरभेदस्य यादृशं वर्णनं कृतवान् धर्मवीरतायाः युद्धवीरतायाश्च तादृशं चित्रणं नाकरोत् यथावसरं धर्मवीरस्य युद्धवीरस्य दयावीरस्य च किञ्चित् किञ्चित् आस्वादनमसौ सहृदयान् अकारयत्।

नलः अत्यन्तप्रभावशाली एवं धर्मप्रियः शासकः आसीत्। तस्य राज्ये अनाचारस्य नाममात्रमपि नासीत्। अधर्मिजनाः अपि नृपभयात् धर्मस्य पालनं अकुर्वन्। सत्ययुगे जातो राजा नलः तपो दानज्ञानयज्ञरूपचतुष्पादैः धर्मं स्थापितवान्। अधर्मोऽपि एकाङ्घ्रिकनिष्ठिकस्य भुवं स्पृशन् अतिशयमनिर्बलो भूत्वा तपस्वी संजातः। अतः राज्ञः नलस्य शासने धर्मस्य स्थितिविषये कथितम्--

**पदैश्चतुर्भिः सुकृते स्थिरीकृते,**
**कृतेऽमुना के न तपः प्रपेदिरे।**
**भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन्,**
**दधावधर्मोऽपि कृशस्तपस्विताम्॥**[1]

नलस्य धर्मपरायणता वेदादिचतुर्दशसु विद्यासु अधीतिबोधा- चरणप्रचारणैरपि ज्ञायते। चतुर्दशसु विद्यासु चतुर्णां वेदानां, षड्वेदाङ्गानां, धर्मशास्त्रस्य, पुराणस्य, मीमांसायाः न्यायस्य च परिगणना क्रियते। नैषध- महाकाव्ये वीररसस्य योजना पुष्कलरूपेण वर्तते। अंगी तुश्रृंगारः अंगभूतरसो वीर इति स्वीकर्तुं शक्यते। इत्यलम्।

---

1. नैषधीयमहाकाव्यम् 1.7

# वाल्मीकीयरामायणे पर्यावरणस्य निरूपणम्

**डॉ. धनञ्जयवासुदेवद्विवेदी**

**कूजन्तं राम रामेति मधुरं मधुराक्षरम्।**
**आरुह्यकविताशाखां वन्दे वाल्मीकिकोकिलम्।।**[1]

**वाल्मीकिगिरिसम्भूता रामसागरगामिनी।**
**श्रीमद्रामायणी गठा पुनाति भुवनत्रयम्।।**[2]

वैज्ञानिके युगेऽस्मिन् साम्प्रतं विश्वस्य कोणे कोणे पर्यावरणस्य भूयिष्ठं विवेचनं विधीयते। अत्र विचित्रा दशा वर्तते। एकतोऽद्यतनं विज्ञानम् अभिनवमभिनवं चमत्कारपूर्णमनुसन्धानं कृत्या जगतः कृते अभूतपूर्वं वरदानस्वरूपमिव प्रतिभाति परन्तु यदा अस्य विध्वंशकारिणामाविष्काराणां स्वरूपं विचार्यते तदा तु विज्ञानमिदं संसास्य कृते महाशाप इवाभाति। महती विडम्बना खलु। नैकाविष्काराणां फलस्वरूपं सर्वबीजप्रकृतिः वसुन्धरा प्राणपरिरक्षकः सर्वत्रगो वायुः जीवनाधायकं जलम्, सर्वधारकः सर्वव्यापकः शब्दगुणः आकाशः अन्नादिपाचको अग्निः सकलं वनस्पतिजगच्च प्रदूषितं सञ्जातम्। पञ्चभूतान्येव पर्यावरणम्। सृष्टिरचनायां पञ्चभूतानां महत्त्वं सर्वाधिकम्। यदा जगतः कारणमेव प्रदूषितं सञ्जायते तदा तत्कार्यजातस्य का कथा। आपाततः वैज्ञानिकाविष्काराः श्लाघनीया यतो हि तैरस्माकं ज्ञानवृद्धिः सञ्जायते, प्रकृतेः प्रकाश्यन्ते भौतिकसुखसाधनानि च प्रवर्धन्ते। आधुनिकदूरसञ्चारमाध्यमैर्निमेषान्तरमात्रेण दूरस्थैः जनैः सुखं सम्पर्कः संस्थाप्यते, अत्यन्तद्रुतगतिशीलैर्गमनागमनसाधनैर्दूरातिदूरदेशादिगमनं ततो निवर्तनञ्च स्वल्पेनैव समयेन सम्भवं जातमस्ति। पृथिव्या उपरि गन्तव्यस्थानं भवेत्, सागरोपति सञ्चलनं स्यात् तद्गर्भे वा गमनं भवेत् आहोस्वित गगने गमनं भवेत् इत्येतत्सर्वं चमत्काराः सन्ति। वस्तुतः 'यत्र विश्वं भवत्येकनीडम्' इति वैदिकी कल्पना कार्यरूपे व्यवहाररूपे वा परिणता। औषधिविज्ञानक्षेत्रेऽपि विस्मयकरी उपलब्धिरस्ति। वस्तुतो मानवजीवनस्य अधिकाधिकक्षेत्रेषु आधुनिकविज्ञानस्योपलब्धयः सर्वत्र विराजन्ते।

परन्तु विज्ञानस्य अनिष्टकरं पक्षमपि बलवद्दृढं च विलोक्यते। आधुनिका वैज्ञानिकाः केवलमाविष्कारपरायणाः प्रतीयन्ते। तेषां दृष्टिरेकपक्षीया सञ्जाता प्रतिभाति। पञ्चभूतविनिर्मितमेतज्जगत् समुपयुक्तसन्तुलनेन सञ्चलति। तस्य विच्छेदो न विधेयः। आधुनिकवैज्ञानिकानुसन्धानकार्यकलापैः सम्पूर्णा प्रकृतिः प्रदूषिता संक्षुब्धा च कृता विद्यते। सर्वत्रोपभोगवादस्य चर्चा चाल्यते। अध्यात्मवादस्य तूपहास एव क्रियते। अत एव पर्यावरणस्य विकराला समस्या प्रादुर्भूताऽस्ति। यदि यथाशीघ्रं

---

1. रामरक्षस्तोस्त्रे - 34
2. रामायणपाठविधिः पृ. 3

पर्यावरणस्य सुरक्षा न सम्पाद्यते प्राणिनां सर्वनाशः आसन्न एवावधारणीयः।

समस्याया अस्या निराकरणार्थं वैज्ञानिका अपि चिन्तिताः सन्ति। तन्नियन्त्राणार्थं विविधोपायाः आविष्क्रियन्ते। परन्तु इत्थं प्रतिभाति यत् समस्याया मूलकारणं किमस्ति इति विषये न कोऽपि तत्त्वतो विचारयति। आस्तिकताया लोपः, नास्तिकताया वृद्धिः, अध्यात्मदृष्टेरभावः, दैवीप्रकृतेर्ग्लानिः, आसुरीप्रकृतेरभ्युदयः, पाश्चात्योपभोगवादस्य प्रसारः, भौतिकसुखसमृद्धिप्रबन्धनमेव जीवनस्य सर्वमिति विचारविकासः प्रधानहेतवः सन्ति पर्यावरणप्रदूषणस्य। आसुरीविचारपरायणा जना इत्थं भवन्ति-

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम्।।**

**एतां दृष्टिमवष्टभ्यः नष्टात्मानोऽल्पबुद्धयः।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः।।**

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।**
**मोहाद्गृहीत्वासद्ग्राहान्प्रसवर्तन्तेऽशुचिव्रताः।।**

**चिन्तामपरिमेयां च प्रलायान्तामुपाश्रिताः।**
**कामोपभोगपरमा एतावदिति निश्चिताः।।**

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्ः।।**

**इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम्।।**

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि।**
**ईश्वरोऽहमहं भोगी सिद्धोऽयं बलवान्सुखी।।**

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।**[1]

महर्षिकुलमणिः क्रान्तदर्शी त्रिकालदर्शी सकललोकज्ञः अव्याहतनवनवोन्मेषशालिनीप्रतिभासम्पन्नो वाल्मीकिः गीर्वाणवाण्या आदिकविः तदीयं रामायणञ्च अस्माकमादिकाव्यम्। काव्यमिदं केनाप्यपूर्वनिर्माण कोशलेन कमनीयं सचेतश्चैतश्चमत्कारकारिचारुतररचनावैचित्र्येण रमणीयं सहृदयहृदयाह्लादनिष्यन्दकं वैरिञ्चप्रपञ्चतो विलक्षणं सुलक्षणं परिहृतनियतिनियन्त्रमनन्यपरतन्त्रम् अलौकिकचमत्कारकारि सर्वरसरुचिरममर्त्यं सनातनं काव्यबीज[2] चिरं विजयतेतरां नितराम्। महाकाव्यमिदं सर्वजनहिताय सर्वजनसुखाय चास्ते। सर्वेषां वर्णानां कृते योगक्षेमविधायकमिदम्-

1. श्रीमद्भगवद्गीतायाम् - 16/8-15
2. बृहद्धर्मपुराणे प्रथमखण्डे - 30/47, 51

**पठन् द्विजो वागृषमत्वमीयात् स्यात्क्षद्धियो भूमिपतित्वमीयात्।**
**वणिग्जनः पण्यफलत्वमीयात् जनश्च शूद्रोऽपि महत्त्वमीयात्॥**[1]

संसारश्रेयविधायकेषु ग्रन्थेषु अनुपमोऽयं ग्रन्थः। अस्य महत्त्वं सार्वकालिकं सार्वलौकिकं च वरीवर्ति। पुरुषार्थचतुष्टयसाधकमिदं महनीयं काव्यम्। जगतः समस्या नास्ति यस्याः समाधानमद्धाः सुनिर्दिष्टं न स्यात्। साम्प्रतमस्माभिः पर्यावरणसमस्या निराकरणीयाऽस्ति। रामायणे पर्यावरणसुरक्षा इत्थं प्रतिपादिता–

प्रकृतिप्रेम– प्रकृतिप्रेम सर्वविधकलयाणसाधकं भवति। अस्माकं कविः मानवहृदयभाव–व्यापारपरिज्ञाने तद् विश्लेषणे च यथा समर्थोऽस्ति तथैव बाह्यप्रकृतेः रहस्यानामवधारणे तत्प्रकाशने च परमप्रवीणः। मानवसमाजः प्रकृतिपरिरक्षणे पटुः प्रकृतिश्च मानवाननन्दप्रदाने समुद्यता दरीदृश्यते। 'परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' इत्यवधारणा द्वयोर्मध्ये सुदृढा। तमसानद्याः प्रशंसां कुर्वन् कविः कथयति–

**अकर्दममिदं तीर्थं भरद्वाज निशामय।**
**रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा॥**[2]

सरयूनद्याः प्रभावज्ञो महाराष्ट्रविवर्धनो विश्वविश्रुतो राजा दशरथः तत्तीर एव अयोध्यानगरीं संस्थापितवान्।[3] पुत्रप्राप्त्यर्थं तत्तट एव अश्वमेधयज्ञभूमिं वरयामास।[4] पर्यावरणस्य शोभार्थ तन्नगर्यां विभिन्नोद्यानानि, पुष्पवाटिकाः, गृहारामाः यत्र–तत्र क्रीडोपवनानि, आम्रादिस्वादिष्टफलवाटिकाः, क्रीडाशैलाः, पुष्करिण्यः, कृत्रिमसरित्समुद्रावर्तकाः, कुल्याप्रवाहाः, स्निग्धच्छायातरवः अन्यान्यमनोहरजलाशयाश्चासन्।

शोणभद्रतटे राज्ञा वसुना गिरिव्रजाख्यस्य नगरस्य स्थापना कृता। तत्र सुमागधी नदी (शोणभद्रनदी) पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते–

**सुमागधी नदी रम्या मागधान् विश्रुताऽऽययौ।**
**पञ्चानां शैलमुख्यानां मध्ये मालेव शोभतै॥**[5]

सगरस्य षष्टिसहस्रपुत्राः भगवता कपिलेन प्रदग्धाः। तेषां स्वर्गलोकगमनार्थं गठायाः सलिलमावश्यकमिति निर्दिष्टं विनतानन्देन गरुडेन–

**गठा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ।**
**तस्यां कुरु महाबाहो पितॄणां सलिलक्रियाम्॥**

1. रामायणे – 1.1.100
2. तत्रैव – 1.1.5
3. तत्रैव – 1.5.5
4. तत्रैव – 1.12.12
5. तत्रैव – 1.32.9

**भस्मराशीकृतानेतान् प्लावयेल्लोकपावनी।**
**तया क्लिन्नमिदं भस्म गठया लोककान्तया॥**
**षष्टिं पुत्रसहस्त्राणि स्वर्गलोकं गमिषयति।**[1]

महता तपसा राज्ञा भगीरथेन स्वर्गलोकात् गठा पृथिवीतलमानीता। सर्वकल्याणञ्च साधितम्। अस्या महत्त्वं वर्णनातीतम्।[2]

**चित्रकूटस्य रमणीयत्वं तत्पर्यावरणस्याभिरामता च–**

चित्रकुटगिरौ ऋषीणाम् आश्रमा आसन्। तत्प्रदेशः भूयिष्ठं नयनाभिरामः पवित्रश्चासीत्। तत्रैव परमसुखप्रदायिनी सकलपापसन्तापविनाशिनी मन्दाकिनी नद्यपि प्रवहति। तत्रत्यस्य पर्यावरणस्य शोभा मनोहारिणी आसीत्। तत्पर्वतीयप्रदेशाः विभिन्नधातुमण्डिता आसन्। केचित् रजतसंकाशाः केचित् क्षतजसन्निभाः केचित् श्रेष्ठमणिप्रभाभिरुद्भासिताः केचिच्च पुष्पार्ककेतकप्रभया विभाषिता आसन्। बहुपशुपक्षिसमाकुले तस्मिन् तपोवने हिंसकजन्तवः स्वसहजवैरं विहाय निरातंकाः सुहृद्वद् विहरन्ति स्म। तुदपरि क्वचित् जलप्रपाता दृष्टिं विलोभयन्ति क्वचित् वसुधातलात् निःसृत्य प्रवहन्त स्रोता मनोहरन्ति। गुहासमीरणो विभिन्नप्रस्फुटितपुष्पप्रभवान् सुगन्धान् नीत्वा दर्शकाणां घ्राणतर्पणं विदधाति। एतादृशो गन्धवहः कं नरं न प्रहर्षयेत्।[3] स्थानमिदमवाप्य श्रीरामचन्द्रो भृशं प्रसीदति। वनवासस्य किमपि दुःखं न स्मरति। तत्र न कश्चित् शोकः सन्तापो वा। स सीता। कथयति–

**न राज्यभ्रंशनं भद्रे न सुहृद्भिर्विनाभवः।**
**मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम्॥**

**यदीह शरदोऽनेकास्त्वेया सार्धमनिन्दिते।**
**लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधर्षति॥**

**बहुपुष्पफले रम्ये नानाद्विजगणायुते।**
**विचित्रशिखरे ह्यस्मिन् रतवानस्मि भामिनी॥**

**वैदेहि रमसे कच्चिच्चित्रकूटे मया सह।**
**पश्यन्ती विविधान् भावान् मनोवाक्कायसम्मातन्॥**[4]

अस्य शैलस्य शतशः शिलाः सर्वत्र शोभन्ते। अस्य पर्वतराजस्य उपरि समुत्पन्नाः सहस्त्रशः ओषधयः स्वप्रभालक्ष्म्या भ्राजमानाः रजन्यां हुताशनशिखा इव विभान्ति। क्वचित् वृक्षाणां सघनस्निग्धच्छायाच्छादितानि स्थानानि सुरम्यभवनानीव प्रतिभान्ति। कानिचित् उद्यानानीव शोभन्ते।

---

1. तत्रैव - 1.41.19-20
2. तत्रैव - 1.44.21-23
3. तत्रैव - 2.94.4-14
4. तत्रैव - 94.3., 15, 16-18

कानिचिच्च स्थानानि सुदूरं प्रसृतैकशिलयैव विराजन्ते। अनेकानि विलासस्थानान्यपि तत्र सन्ति यत्र कामिनः विलासिन्यश्च स्ववैरं विहरन्ति।[1] विलक्षणोऽयं चित्रकूटः–

**भित्त्वेव वसुधां भाति चित्रकूटः समुत्थितः।**
**चित्रकूटस्य कूटोऽयं दृश्यते सर्वतः शुभः॥**

**वस्वौकसारा नलिनीमतीत्यैवोत्तरान् कुरून्।**
**पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः॥[2]**

एतादृशमेव पर्यावरणमादर्शपर्यावरणमस्ति। एतादृशे पर्यावरणे सर्वे निरामयाः सुखिनश्च भवन्ति।

**पर्यावरणसमृद्धौ मन्दाकिनीनद्याः महत्त्वम्**– पर्यावरणस्य मनोज्ञतार्थं सर्वे ऋषयो मुनयो राजानः सामान्यजनाश्च जागरूका आसन्। प्रकृतिकस्थलानामुच्छेदनं न कुर्वन्ति स्म। इदमेव कारणमस्ति यत् सर्वे सरोवराः, सर्वा नद्यः, गिरयः, वनान्युपवनानि तपोवनप्रभृतिप्राकृतिकस्थानानि नैसर्गिकशोभासम्पन्नान्यासन्। मन्दाकिनीनद्याः शोभा नयनाभिरामा आसीत्। तत्तटमुभयतः हंससारसमयूरादयः पक्षिणः हृद्यप्रसूनानि पुष्पफलभाराक्रान्ताः तरवः मृगसन्धाः करिणः करिण्यः करिशाकाः अन्यान्य-जीवजन्तवश्च मिलित्वा नद्याः लावण्यं वर्धयन्ति स्म।

वस्तुतः एतै सर्वैः सा नदी राजराजस्य कुबेरस्य सौगन्धिकसरोवर इव विराजमानासीत्–

**नानाविधैस्तीररुहैर्वृतां पुष्पफलद्रुमैः।**
**राजन्तीं राजराजस्य नलिनीमिव सर्वतः॥[3]**

विधुतकल्मषैः तपोदमशमन्वितैः सिद्धमहात्माभिरवगाहनेन एतज्जलममृतवत् परमाह्लादजनकमस्ति। सर्वत्र कुसुमानि विकीर्णानि। वायुनोद्धूतशिखरैशिखरैश्चित्रकूटगिरिः नृत्य कुर्वन्निवास्ते–

**मारुतोद्धूतशिखरैः प्रनत्त इव पर्वतः।**
**पादपैः पुष्पपत्राणि सृजद्भिरभितो नदीम्॥[4]**

पुष्पान्वितायामस्यां स्नानं कृत्वा सर्वे जनाः तत्क्षणं विगतक्लमाः सञ्जायन्ते। नदीयमयोध्या इवानन्ददायिनी सहृदयस्य रामस्य दृष्टौ। वस्तुतस्तज्जलं निपीय तस्य हृदि मनगापि अयोध्यासाम्राज्यस्योकांक्षा नास्ति–

**त्वं पौरजनवद् व्यालानयोध्यामिव पर्वतम्।**
**मन्यस्व वनिते नित्यं सरयूवदिमां नदीम्॥**

1. तत्रैव - 2.94.20-22, 25
2. तत्रैव - 2.94.23, 26
3. तत्रैव - 2.95.4
4. तत्रैव - 2.95.8

**उपस्पृशंस्त्रिषवणं मधुमूलफलाशनः।**
**नायोध्यायै न राज्याय स्पृहये च त्वया सह॥**[1]

**ऋष्यमूकपर्वतस्य पम्परासरोवरस्य च स्वस्थपर्यावरणम्–**

परमसुखप्रदायकस्य ऋष्यमूकपर्वतस्य निर्माणं पुरा साक्षात् ब्रह्मणा कृतमस्ति। परमोदारोऽयं पर्वतः। अत्यन्तविलक्षणमनुपमं च तस्य महत्त्वम्। तस्य शैलस्य शिखरे शयानो जनः स्वप्ने यत् वित्तं लभते तत् प्रबुद्धोऽपि प्राप्नोति। परन्तु यः पापकर्मा तत्राधिरोहति स राक्षसैः भृशं ताड्यते। पुण्यात्मानः नूनं तत्र सुखं लभन्ते–

**शयानः पुरुषो राम तस्य शैलस्य मूर्धनि।**
**यत् स्वप्ने लभते वित्तं तत् प्रबुद्धोऽधिगच्छति॥**
**यस्त्वेनं विषमाचारः पापकर्माधिरोहति।**
**तत्रेव प्रहरन्त्येनं सुप्तमादाय राक्षसाः॥**[2]

पम्पासरोवरस्य जलं कमलपुष्पसुगन्धेन सुवासितं शिवदं सुखदं शीतलं रोगनाशकं क्लेशहरं स्वास्थ्यवर्धकं रूप्यस्फटिकसंनिभं विमलम् अत्यन्तसुखसंस्पर्शं चास्ते। मलयाचलचन्द्रनस्य स्पर्शमवाप्य फुल्लपद्मोत्पलवत्याः पुष्करिण्याः सुखसंस्पर्शो पवनः श्रमापनयनं कुर्वन् सर्वेषामनुरञ्जनं करोति। ते खलु धन्या ये पम्पावनमारुतं सेवन्ते–

**पद्मसौगन्धिवहं शिवं शोकविनाशनम्।**
**धन्या लक्ष्मण सेवन्ते पम्पाया वनमारुतम्॥**[3]

**वर्षतौं पर्यावरणस्य स्वरूपम्–**

अयमृतुः विभिन्नवनस्पतीनां, धरित्र्याः, नदीनां जलाशयानां वनोपवनानामुद्यानानाम्, पतोवनानां पर्वतानां कृषकाणां सम्पूर्णजगतां च जीवनाधायकं रसायनम्। ग्रीष्मर्तौ सर्वे क्षीणाः सञ्जायन्ते। परन्तु पर्जन्यमवाप्य सकला वसुन्धरा कृत्स्ना प्रकृतिः अखिलं पर्यावरणं सर्वे प्राणिनश्च संतृप्ताः कृतकृत्याश्च सञ्जायन्ते। धरिण्याः धूलिः प्रशान्तः समीरणः शीतलः निदाघदोषप्रसरोऽवरुद्धः हंसाः मानसरोवरं प्रति प्रस्थिताः चक्रवाकाः स्वप्रियान्विताः, नद्या उदकपरिपूर्णाः, शैलाः शोभान्विताः, वनस्पतिजगत् अभिनवं हरित्वमलभत्। यत्र–यत्र स्वादिष्टानि फलानि, षट्पदान्वितानि पुष्पाणि, सस्यक्षेत्राणि मयूराणां नृत्योत्सवाः, सर्वेषां प्रोदवहाः सन्ति। सम्पूर्णं गगनं मेघाच्छन्नम्। निशि न ताराः न च दिने दिनकरः। नवजलधरैर्धरणी वितृप्ता। सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिाका इव समन्ततः विमला तोयधाराः पतन्ति। यत्र तत्र–

---

1. तत्रैव - 3.73.33-34
2. तत्रैव - 3.73.33-34
3. तत्रैव - 4.1.104

**षट्पादतन्त्रीमधुराभिधानं प्लवठमोदीरितकण्ठतालम्।**
**आविष्कृतं मेघमृदठनादैर्वनेषु संगीतमिव प्रवृत्तम्॥**
**क्वचित् प्रनृतैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः।**
**व्यालबबर्हाभरणैर्मयूरैर्वनेषु संगीतमिव प्रवृत्तम्॥**
**सर्वानुकूलं खल्विदं नैसर्गिकं पर्यावरणम्।**

**शरत्कालीनं पर्यावरणम्-**

लोकं सुवृष्ट्या संपरितोष्य नदीस्तटाकानि च पूरयित्वा वसुधां च निष्पन्नसस्यां विधाय शुभ्रवर्चसः तोयधराः शरत्काले तथैव शोभायमानाः सन्ति यथा परित्यक्तैषणाः शान्ता मुक्तकिल्बिषा मुनयः। इदानीं जलाशयनामम्बु सन्मनुष्यमन इव प्रसन्नं, वायुर्मृदुर्विमलश्च चन्द्रः क्रौञ्चपक्षीणां ध्वनिः प्रस्फुटितानि कमलानि च स्फुटं शरत्कालागमनं सूचयन्ति। शारदीया रात्रिः शुक्लांशुकसंवृताठी सुन्दरी ललनेव शोभते। उदितः शशाङ्क एव तस्याः सौम्यवदनं तारागण एव चोन्मीलितनयनानि वर्तन्ते। वापीनां रमणीयता विलक्षणा। प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनां वाप्युत्तमानां लक्ष्मीः साम्प्रतं विभूषितानां वराठनानामिवाभाति। प्रभातकालेषु प्रियतमोतभुक्ताः कारमिन्यो यथा अलसगामिन्यो भवन्ति तथैव मीनोपसंदर्शितमेखलानां नदीवधूनां गतयोऽद्य मन्दाः सञ्जाताः। इत्थं सकला प्रकृतिः निखिलं च पर्यावरणमाह्लादकरं भवति शरत्काले। सर्वशुभकर्मकरणार्थमुपयुक्तोऽयं समयः।

**लंकाया अद्भुतशोभायोजना तत्रत्यं पर्यावाणञ्च–**

लंकाया निर्माणं भगवता विश्वकर्मण सुनियोजितरूपेण कृतमासीत्। तस्मात् तद्विलक्षणतायाः किं कथनम्। सलीलं अनाधृष्यं सागरमतिक्रम्य चित्रकूटपर्वतस्य शिखरमारुह्य लंकायाः शोभामवलोकयति वायुनन्दनो हनूमान्। सर्वत्र मनोहरपुष्पाणि स्निग्धच्छायातरवः वृक्षाच्छादितपर्वताः सुगन्धान्वितानि वनान्युपवनानि हंसकारण्डवाकीर्णाः पद्मोत्पलावृताश्च वाप्यः विविधानि रम्याणि क्रीडास्थलानि नानाजलाशयाश्चासन्। तान् अभितः सर्वर्तुफलपुष्पप्रदायका विविधा वृक्षाः परमानन्दकरा आसन्। रम्या सा महापुरी काञ्चनप्राकारेणावृताऽतिष्ठत्। तत्र शारदांबुदसंनिभानि गिरिसंकाशानि उच्चभवनानि विराजन्ते। सर्वत्र शुभ्रा उच्चाराजमार्गा आसन्। शतशः अट्टालिकाभिः पताकाध्वजैश्च समन्तात् शोभिता सा पुरी राजते। हनुमान् तां नगरीं देवपुरीमिव ददर्श–

**तोरणैः काञ्चनैर्दिव्यैर्लतापङ्क्तिविराजितैः।**
**ददर्श हनुमाँल्लंकां देवो देवपरीमिव॥**
**गिरिमूर्ध्नि स्थितां लंकां पाण्डुरैर्भवनैः शुभैः।**
**ददर्श स कपिः श्रीमान् पुरीमाकाशगामिव॥**
**पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मण।**
**प्लवमननिवाकाशे ददर्श हनुमान् कपिः॥**

1. तत्रैव - 4.1.36-37

**वप्रप्राकारजघनां विपुलाम्बुवनाम्बराम्।**
**शतघ्नीशुलकेशान्तामट्टालकावतंसकाम्।।**

**मनसेव कृतां लंका निर्मितां विश्वकर्मणा।**[1]

सर्वत्र नयनाभिरामं वैलक्षण्यमासीत्। अरण्यकाण्डे छद्मचारी रावणः सीतां प्रति लंकायाः शोभां कथयति-

**हस्त्यश्वरथसम्बाधा तुर्यनादविनादिता।**
**सर्वकामफलैर्वृक्षैः संकुलोद्यानभूषिता।।**[2]

व्यासक्तवैदूर्य सुवर्णजालं सविहंगजालं महत्प्रावृषि विद्युत्पनद्धं मेघजालमिव मनोहरमासीत्। तत्रैकमनुपमं पुष्पकविमानमासीत् यत्र स्वेच्छया सर्वत्र मारुततुल्यवेगेन गन्तुं समर्थमासीत्। तस्य निर्माणं लोकोत्तरमासीत्-

**न तत्र किञ्चिन्न कृतं प्रयत्नतो न तत्र किञ्चिन्न महार्घरत्नवत्।**
**न ते विशेषा नियताः सुरेष्वपि न तत्र किञ्चिन्न महाविशेषवत्।।**[3]

**प्रकृत्या पशुपक्ष्यादिभिश्च सह मानवसम्बन्धः-**

महत्तमे महाकाव्ये रामांयणे प्रकृत्याः पशुपक्ष्यादीनां मानवानां च मध्ये पारस्परिकसम्बन्धः परमप्रगाढो विलोक्यते। सर्वे सहृदयाः सर्वभूतहितेरता वर्णिताः सन्ति। सर्वत्र करुणायाः दयायाः क्षमायाः सहिष्णुतायाः आर्जवस्य परोपकारस्य अलोलुपतायाः सौहर्दस्य सहानुभूतेः लोकलज्जायाः धृतेः अद्रोहस्य पारस्परिकस्नेहस्य लोकोपकारस्य सर्ववर्णाश्रमसमन्वयस्य विश्वबन्धुतायाश्च परिवेशः प्रात्यते। सर्वभूतहिते रतः लोकाराधानतत्परो लोकाभिरामः पित्र्याज्ञानुवर्ती वेदवेदाठतत्त्वज्ञः सर्वलोकप्रियः सर्वविद्यापारठतः हिमवानिव धैयेवान् विष्णुरिव सर्वसमर्थः सोमवत्प्रियदर्शन क्रोधे कालाग्निसदृशः क्षमया पृथिवीसमः बुद्धिमान् वीर्यवान् आत्मवान् जितक्रोधो जितेन्द्रियः सत्यवादी मधुराभाषी धर्मकामार्थतत्त्वज्ञः अमोघक्रोधहर्षश्च त्यागसंयमकालवित् स्थिरप्रज्ञः बृहस्पतिरिव वाग्मी श्रीरामः यदा सीतालक्ष्मणाभ्यां सह मातुः पितुश्चाज्ञामक्षरशः परिपालनार्थं विशालसाम्राज्यं भ्रातुः भरतस्य कृते तृणवत्परित्यज्य सहर्षं वनं गच्छति तदा अवधवासिनां दशांश सुतरां दयनीय सञ्जाता। अन्तःपुरस्थिताः सर्वा महिष्यः विवत्सा धेनव इव दुःखार्ता भूत्वा सरस्वरं विचुक्रुशुः रुरुदुश्च। पुत्रशोकसन्तप्तो राजा दशरथः मणसन्नः सञ्जातः। तद्दिने अग्निहोत्रमवरुद्धं गृहस्थानां गृहस्थानां गृहेषु भोजनादिकं न निर्मितं प्रजाभिः सर्वकार्याणि परित्यक्तानि।

---

1. तत्रैव - 5.2.19-21
2. तत्रैव - 3.48.12
3. तत्रैव - 5.8.3

किञ्च सूर्यः सहसा अस्ताचलं गतः हस्तिनः मुखे धृतान् कवलान् त्यक्तवन्तः गोभिः स्ववत्साः स्तनपानान्निवारिताः। किं बहुना– 'पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत।'[1] सर्वे ग्रहा अपि रामवनवासेन विक्षुब्धा जाताः। त्रिशंकुलोहितांगश्च बृहस्पतिबुधौ अन्ये च शनिशुक्रादयो ग्रहाः रात्रौ वक्रगत्या सोममभ्येत्य क्रूरकान्तियुक्ताः परमदारुणा भूत्वा व्यवस्थिताः। आकाशे मेघराशिः वायुवेगसमुत्थितमहोदधिरिव प्रतिभाति स्म। रामे वनं प्रव्रजिते सम्पूर्णमयोध्यानगरं भूकम्प इव संक्षुब्धम्– 'रामे वनं प्रव्रजिते नगरं प्रचचाल तत्।' 'सर्वा दिशः पर्याकुलाः सञ्जाताः। सर्वं स्थानं तिमिराच्छन्नम्।' न कोऽपि ग्रहः न चापि किमपि नक्षत्रं प्रचकाशे। सहसा सर्वे नागरिकाः दैन्यदशामगच्छन्। न कोऽपि आहारे वा विहारे वा मनोऽकरोत्। सर्वं जगत् पर्याकुलं सञ्जातम्–

**न वाति पवनः शीतो न शशी सौम्यदर्शनः।**
**स सूर्यस्तपते लोकं सर्वं पर्याकुलं जगत्॥**[2]

वस्तुतः सज्जनानां कृते सर्वाणि पञ्चमहाभूतानि सहानुभूतिपूर्णानि भवन्ति। हनुमता लङ्कादहनकाले सर्वं प्रदग्धम्। यदा जनै सीता सूचिता यत् सीतयाकृतसम्वादः कपिः लङ्कायां सर्वत्र प्रदीप्तेन लाठूलेन परिणीयते। तदा तच्छ्रुत्वा शोकसन्तप्ता सीता कपेः मठलार्थं हुताशनदेवस्योपासनां चकार। तत्प्रार्थनां श्रुत्वा अग्निना हनुमतः मठलमित्थं सूचितम्–

**ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः।**
**जज्वालमृगशावाक्ष्याः शंसन्निव शुभं कपेः॥**

**हनूमज्जनकश्चैव पुच्छानलयुतोऽनिलः।**
**ववौ स्वास्थ्यकरो देव्याप्रालेयानिलशीतलः॥**[3]

हनुमान् स्वानामयं विलोक्य चिन्तयति–

**सीतायाश्चानृशंस्येन तेजसा राघवस्य च।**
**पितुश्च मम सख्येन न मां दहति पावकः॥**[4]

लङ्काविजयोपरान्तं यदा सीतायाः पवित्रतायाः अग्निपरीक्षा कृता तदाऽपि भगवता अग्निना सीता संरक्षिता परिशुद्ध चाभिप्रमाणिता। एवमेव उत्तरकाण्डे सीताशपथसमये भगवत्या पृथिवीदेव्या सीतायाः सम्मान् शाश्वकीर्तिश्च प्रख्यापिता। परमामार्मिकोऽयं प्रसठः सततं स्मरणीयः–

**सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी।**
**अब्रवीत प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी॥**

---

1. तत्रैव – 2.41.10
2. तत्रैव – 2.41.18
3. तत्रैव – 5.53.31-32
4. तत्रैव – 5.53.37

**यथाहं राघवादन्यं मनसापि न चिन्तये।**
**तथा मे माधवी देवी विवरं दातुमर्हति।।**

**मनसा कर्मणा वाचा यथा रामं समचये।**
**तथा मे माधवी देवी विवरं दातुमर्हति।।**

**यथैतत् सत्यमुक्तं मे वेद्मि रामात् परं न च।**
**तथा मे माधवी देवी विवरं दातुमर्हति।।**

**तथा शपन्त्यां वैदेह्यां प्रादुरासीत् तदद्भुतम्।**
**भूतलादुत्थिं दिव्यं सिंहासनमनुत्तमम्।।**

**ध्रियमाणं शिरोभिरस्तु नागैरमितविक्रमैः।**
**दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः।।**

**तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम्।**
**स्वागतेनाभिनन्द्यैनामासने चोपवेशयत्।।**

**तामासनगतां दृष्टवा प्रविशन्तीं रसातलम्।**
**पुष्पवृष्टिरविच्छिना दिव्या सीतामवाकिरत्।।**[1]

सकललोकमठलविधायिनी रम्या रामायणीकथेयं मानवचरित्रं सकलं पर्यावरणञ्च निर्मलीकरोत्विति।

1. तत्रैव - 7.97.13-20

# भारतीयस्वतंत्रतासंग्रामे राष्ट्रभक्तानां संस्कृतमनीषिणाञ्चावदानम्

**डॉ॰ शिवकुमारमिश्रः**

**राष्ट्रेषु भारतं रम्यं रम्यः संस्कृतवाङ्मयः।**
**तत्रापि संस्कृतिरर्भ्या धन्याः संस्कृतसाधकाः॥**
**भाषैका भारतीयानां देवभाषेति भण्यते।**
**स्वतः संस्कारयुक्तत्वात्संस्कृतं चापि कथ्यते॥**

अपि च,

**भावात्मकैकतास्माकी संस्कृतेनैव रक्षिता।**
**तस्मात्संस्कृतभाषयाः स्वाध्यायः प्रविधीयताम्॥**

तथास्तु निसर्गतः आवेदेभ्योऽभिजातसंस्कृतवाङ्मयं यावत् सर्वत्रापि स्वातन्त्र्यभावनायाः पृथक् प्रसङ्गेषु समवलोक्यते। सर्वं परवशं दुःखं सर्वात्मवशं सुखमिति समुद्घोषयद्भिः संस्कृतमनीषिभिरङ्गीकृतं यत् जीवित रसायनभूतं तत्त्वं स्वातन्त्र्यम्। स्वकीये तन्त्रे मानवः सर्वविधं सौख्यं भजते। परन्तु परतंत्रेऽवस्थिते सत्यसौ परकीयेच्छानुरूपं समाचरितुं प्रभवति। अस्मादेव कारणात् स्वतंत्रता कस्यचिदपि राष्ट्रस्य कृते परमावश्यकीति निश्चप्रचम्।

प्रकृतनिबन्धे भारतीयस्वतंत्रताप्राप्त्यर्थं यादृशं दृढ़प्रतिज्ञप्रयासम् अङ्गीकृतं सुरभारती समुपासकैर्मनीषिभिः राष्ट्रभक्तैश्चेति सर्वथा श्लाघनीयमिति मामकीना मतिरिति। अस्मिन् क्रमे आङ्गलशासकानां संस्कृतं प्रति राष्ट्रभक्तान् प्रति विहितात् दमनात्मकदुर्व्यवहारात् स्वतंत्रता कामयमाना राष्ट्रभक्ताः स्वकर्मणि क्रमशः दृढ़प्रतिज्ञाः सञ्जाताः।

परिणामतः लार्ड मैकाले कृतानां संस्कृताऽधरी करणोद्योगानां महान् विरोधोऽभून्निखिलेऽपि राष्ट्रे। फलतः सर्वेऽपि तदानीन्तनाः संस्कृत पत्रकाराः राष्ट्रभक्ताश्च संस्कृत रक्षणाय बद्धपरिकराः सञ्जाताः।

संस्कृतरत्नाकरे सूर्यनारायण शर्मा (1904) शारदायां कुप्पुस्वामिशास्त्री सुनृतवादिन्याञ्च जयचन्द्र सिद्धान्तभूषणः (17 जनवरी 1907 मितेऽङ्गे) संस्कृत पक्षमाश्रित्य दृष्ट्युन्मीलनक्षमान्

विस्तृतलेखान् प्रकाशितवन्तः। काशीविद्यासुद्या (1866 ।ण्क्ण) साप्ताहिकी मञ्जुभाषिणी (1902 ।ण्क्ण्द्ध दैनिकी जयन्ती (1906 A.D.) चापि लेखान् प्रकाश्य प्रतिविरोधं प्रकटितवत्यः।

यद्यपि काले तस्मिन् महाविभूतयः शतमिता आसन् निखिलेऽपि राष्ट्रे। शासनेऽपि ते प्रतिष्ठिताः। तथापि भारतीयाः सन्तोऽपि केचन पाश्चात्यसंस्कृति चारणभूता आसन्। तत्र राजाराममोहनरायः, राधाकान्तदेवः (1784-1867) कृष्णमोहनवन्द्योपाध्याश्चेति केचन जनास्तस्मिन् सन्दर्भे गणनीया वर्त्तन्ते। एते सर्वे संस्कृतभाषाया वाङ्मयस्य च घोर विरोधिन आसन्। तस्मिन्नेव काले नरसिंहाचार्यः विक्टोरियाप्रशस्तिम् (1892) मितवर्षे लिखितवान्। राजा सुरेन्द्र मोहन टैगोरः प्रिंस पञ्चाशदाख्यं 1975 मितवर्षे विक्टोरियामहात्म्याख्यं काव्यञ्च 1898 मितवर्षे विलिखितवान्।

पक्षविपक्षौ युगपदेव पवर्त इति प्रकृतिनियमः। यथैते संस्कृतकवयः विस्मृतभारतसौव-र्णातीतकथाः स्वल्पस्वार्थसिद्ध्यर्थम् आंग्लशासनप्रशस्तिनिरता आसन्।

वस्तुतः व्यतीते सति सप्तपञ्चाशदुत्तराष्टादशशततमस्य वर्षस्य प्रथमभारतीय- स्वातन्त्र्यसमरे यदा भारतशासनतन्त्रं साम्राज्ञी विक्टोरिया स्वयं गृहीतवती वायसरायाख्यमात्मप्रतिनिधिञ्च नियोक्तुमुपचक्रमे तदा संस्कृतविद्वांसो देववाणीप्रतिष्ठापनार्थम् आशावन्तो बभूवुः।

साम्राज्ञ्या विक्टोरियाः स्वर्णजयन्ती (पञ्चाशत्तमी वर्षग्रन्थिः) 1887 मितखृष्टाब्दे सोत्साहं ससम्भारञ्च समाम्नाता भारते। अस्मिन्नवे वर्षे यथा शासनपक्षधरान् भारतीयान् पुरस्कर्तुं विविधो पाधयः वितीर्णाः (सर, रायबहादुर प्रभृतयः) तथैव संस्कृत पण्डितानपि सम्मानयितुंमहामहोपाध्यायनामा कश्चिदुपाधिरूपकल्पितः। एतावन्मात्रं संस्कृतादरनाटकं निर्व्यूढं विक्टोरियाशासनकाले। परन्तु राजकार्येषु, विद्यालय शिक्षा पद्धतौ, न्यायालयादिषु च या महनीया स्थितिरासीत् संस्कृतस्य मैकाले पूर्वं सा न पुनराजगाम। राजकृपापात्रतामुपगताः संस्कृतपण्डिताः समवाप्त महामहोपाध्यायपदवीका एव स्वर्गसौख्यं जीवनसार्थकताञ्चानुभवन्तः परां प्रीतिमुपगताः।

परन्तु साम्राज्यविरोधिनः संस्कृतज्ञाः कथं राजभक्ताः स्युः? 1882 मितवर्षे प्रकाशिते श्रीबंकिमचन्द्रस्य आनन्दमठनाम्ने उपन्यासे भारतभूमिवन्दनात्मकं गीतमैकमासीत्-"वन्दे मातरम्"।

**सुजलां सुफलां मलयजशीतलाम्।**

**शस्यश्यामला मातरम्!**

**वन्दे मातरम्!!**

अमोघमन्त्राक्षरकल्पं गीतमिदं भारतभूमि हिमगिरि सिन्धुव्यायतां जननीरुपेण प्रतिष्ठापयामास। अनेन सदैव सततम् आंग्लशासनविरोधः समारब्धः। उदयानन्दशर्मा प्रबोधितवान्।

**विस्मृतातीतगौरवान् भारतीयान्–**

क्व वा वयं हीनतया दरिद्राः? इति प्रणीय। महाकविः सर्वतन्त्रस्वतन्त्रः केरलवर्मा 1875 मितवर्षे भारतीयभूपान् निर्भर्सितवान् तथा च स्वकीय विशाखविजयनाम्नि महाकाव्ये तेन निगदितम्–

**राजकारालयं नीताः केरलो राजपुरुषैः।**
**अज्ञातसीमं स्वातन्त्र्यविच्छेदक्लेशमन्वभूता॥**

शिवराजविजयस्य प्रणेता महाकविः श्री अम्बिकादत्तव्यासोऽपि (1858–1900 A.D.) राष्ट्रभावनाया महान् सम्पोषक आसीत्। तत्र श्रीधरपाठकमहोदयः भारतगीतं भारतस्तवञ्च कृतवान् सरलमसृणपदबन्धैः तद्यथा–

**वन्दे भारतदेशमुदारम्। सुषमासदनसकलसुखसारम्।**
**भालविशालहिमाचल भ्राजम्। चरणविराजितअर्णवराजम्॥**
**तपघृतसहसकोटिकरवालम्। दुसहदुराप प्रताप विशालम्॥**
**वन्दे भारतदेशमुदारम्॥॥**

लब्धयशा महान् पत्रकार अप्पाशास्त्रि महोदयो मातृभक्तिनाम्नी मर्मस्पर्शिणी कवितां संस्कृतचन्द्रिकायां (1894 A.D.) प्रकाशितवान्।

पुनश्च, कवयित्री सरोजमोहिनी देव्यपि स्वकीयनिबद्धायां विद्योदय पत्रिकायां लिलेख (खण्ड–19, 1890 A.D.)

**घात्र्यै समर्प्यैव बालकानां सम्पालनं वा खलु रन्धनं वा।**
**सन्न्यस्य हरते परिचारिणीकानां रक्ता आसन्नाटकपाठकार्ये॥**

हिन्दीसाहित्य पुरोधा आचार्य महाबीर प्रसाद द्विवेदी (1864–1935 A.D.) उभय भाषा कविरासीत्। तेन महाकविना संस्कृतचन्त्रिकायाम् (1 जून 1898) समाचार पत्र सम्पादक स्तवाभिधां कवितां प्रकाशितवान्। आचार्य द्विवेदिमहोदयेन पद्य बन्धेन एकेन भणितम्–

**इहास्ति साधुत्वमतः परं किं प्रकाश्य लोकस्य विमाननां यत्।**
**स्थिते भये पाणियुगं प्रसार्य क्षमस्व मोदस्व भाषते त्वम्॥**

तस्मिन्नेव क्रमे बंगभंगे सञ्जात एव भारतवासिनः संक्षुब्धाः सञ्जाताः। सर्वत्रापि क्रान्ति स्वरोऽश्रूयत। ताराचन्द्र भटाचार्यः (बनारस षड्यंत्र संयोजन सदस्यः) भारतगीतिकां विरच"य स्ववेदनां प्रकटितवान्। 16 अक्टूबर, 1905 तिथौ कलिकतानगर्यां बंगभंगमुपलक्ष्य राष्ट्रियशोक दिवसः समाम्नातः।

वन्देमातरमिति स्वातंत्र्यगीतमुद्गायन्तः परः सहिस्त्रमिताः स्त्रीपुरुषा गङ्गापुलिनमासेदुः स्ववेदनां हृदयामर्ष शासनविरोधञ्च प्रकटितवन्तः। बंगभंगान्दोलनक्रमे अप्पाशास्त्रि महोदयेन ''संस्कृतचन्द्रिका प्रकाशिते (नवम्बर 1905 मितवर्षे) स्वकीयो विचारः प्रकटितः–

'स्वजनविद्वेषिणः पुनः केऽपि दुर्मतयो वन्दे मातरम् इति पदद्वितयस्य बध्यतां मार्यतां चेत्यर्थ बोधयन्ति।'

निर्वासितो लाला लाजपतरायः पञ्जाब केसरी। कस्येदं निर्वासनम् इति शीर्षकेण बृहल्लेखं प्रकाश्य सुनृतवादिनीसम्पादकः (अप्रैल 1907 मितवर्षे) लाजपतरायस्य महिमानं निरुप्य तस्य निर्दोषमपि साधितवान्। अनेन निष्ठुरशासनस्य षड्यंत्र विशदीभूतम्।

**जन्मसिद्धोऽधिकारोऽस्ति अस्माकं वै स्वतंत्रता**

इति स्वातन्त्र्यमन्त्रघोषको लोकमान्य बालगङ्गाधरतिलकोऽपि शासनेन दण्डितो र्निासितश्च। सुनृतवादिनी सम्पादकः पत्रिकायाः (23 जुलाई 1908 मितऽङ्के) 'हा धिक् कष्टम्! दण्डितो महात्मा तिलकः। इतिशीर्षकेण तिलकमहाभागानां कर्तृत्वं व्यक्तित्वञ्च स्मारं स्मारं इत्थं व्याजहार–

**निगन्तु निसर्गदुर्धियो निगडं दूषणमित्यमुं तव।**
**अपरं स तथापि भूषणं भवतो येन विशिष्य पूज्यते॥**

भवतु। स्वतंत्रता संग्रामे योगसिद्धेः प्राक् अरविन्दघोषो महान् क्रान्तिनायकः आसीत्। अलीपुर कारागारे निरुद्धोऽसौ 1906 मिते खिष्टाब्दे भवानी भारती प्रणीतवान्। अपूर्णे नवनवतिपद्यात्मिकेऽस्मिन् खण्डकाव्ये भारतधरित्री भवानीभारती रूपेण चित्रिता राष्ट्रभक्तेन कविना।

व्यक्तिविशेषांल्लक्षीकृत्य रचितानां ग्रंथानाम् परिगणनयाऽपूर्वमखिलेऽस्मिन् जगति महात्मागांधिनः स्थानम्। तत्र सर्वप्रथममाचार्यचारुदेव शास्त्रिणः 'श्रीगान्धिचरितम्' गद्यप्रबन्ध 1930 तमे वर्षे लाहौर नगरात् प्रकाशितमभवत्। अत्र भारतस्य स्वतंत्रताप्राप्ते पूर्वघोषणानि विहितानिसन्ति–

**ध्रुवं महात्मा जेष्यति ध्रुवं च भारतवर्षं स्वातंत्र्यमाप्स्यतीति।**

ततः परम् महाराष्ट्रदेशीयया विदुष्या क्षमारावमहागया 1931 तमे वर्षे अष्टादशाध्यायात्मकं नवपञ्चाशदुत्तरषट्शतपद्यात्मकं ''सत्याग्रह गीतां नामकं महाकाव्यं रचितम् यच्च 1932 तमे वर्षे प्रकाशितम्। 1948 तमे खिष्टाब्दे प्रकाशोऽपरोभागः 'उत्तरसत्याग्रह गीता' महात्मनो जीवनस्य 1931 तः 1944 वर्षतमं यावद् घटिताभिः घटनाभिः सम्पूरितोऽस्ति। तथा च 1949 तमे वर्षे रचितोऽन्तिमो भागः 'स्वराज्यविजयः' 1962 तमे वर्षे प्रकाशितः यस्मिन् समग्ररूपेण भारतीय स्वतंत्रता संग्रामः स्वरूपश्च चित्रिते।

पुनश्च महात्मागान्धि नः चिन्तनं तेषां चरित्रनिर्माणे संस्कृतशास्त्रस्य विशेषेण च गीताया एव प्रभावः प्रचुरमात्रेणोपलभ्यते, प्रतिपदं च संस्कृतच्छाया सन्दृश्यते। तत्र गीतायाः श्लोकद्वयस्य प्राधान्यं स्वीकर्तुम् शक्यते–

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।**
**सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभि जायते॥**
**क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृति विभ्रमः।**
**स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥**

तथास्तु भारतीय स्वतंत्रताप्राप्त्यर्थं विहितः प्रयासः सर्वथा श्लाघनीयः। अस्मिन् तद्युगीनेषु पत्र पत्रिकासु एवं गुणविशिष्टाः शतसहस्त्रमिताः कविताः प्रकाश्यमुपगताः। प्रकाशितासु तासु कवितासु संक्षेपेणात्र वर्ण्यन्ते–

पं. श्रीचारुदेव शास्त्रि महोदयस्य – श्री गान्धिचरितम्
पं. श्री रमेशचन्द्रशुक्लस्य – ''चारुचरितचर्चा''
पं. श्री मथुराप्रसाददीक्षितस्य– ''गान्धिविजयनाटकम्''
पं. जयराम शास्त्रिणः – ''श्री गान्धिबान्धवम्''
पं. चरणमिश्रस्य – ''भारतगौरवम्''
पं. श्री कृष्णमाचार्यस्य– ''भारतगीतम्'' ''तिलकमञ्जरीसंग्रहश्च''
पं. श्री नगरकरस्य – ''राष्ट्रिया जागृतिः''
पं. श्री आत्माराम शास्त्रिणः – ''शिवहृदयम्''
पं. श्री एम0के0 ताताचार्यस्य – ''भारतीय मनोरथः''
पं. श्री वरदकृष्णमाचार्यस्य – ''भारत खण्डः''
पं. श्री रामावतार शर्मणः – ''अभिनव भारतम्''
पं. श्री चारूचन्द्रवन्द्योपाध्यायस्य – ''मातृसम्बोधनम्''
पं. श्री केशव गोपालस्य – ''तिलकसौरभम्''
पं. श्री कृष्णदेव काव्यतीर्थस्य – ''भारतवर्षम्''
पं. श्री द्विजेन्द्र ब्रह्मचारिणः – ''मातृभूमे''
पं. श्री विजय चन्द्रशर्मणः – ''उद्बोधनगाथा''
पं. श्री शालिग्राम शर्मणः – ''प्रबोधनम्''
पं. श्री लक्ष्मीनारायण शिव प्रसाद शर्मणः– ''भारतेतिवृतसारः''
पं. श्री शिव कुमार मिश्र स्य – ''तिलकः राष्ट्रनायकश्चेति''

अनेनैव प्रकारेण एतेषां विद्वन्मनीषिणां स्वराष्ट्रमूलिकाभिः कविताभिः सर्वथैव भारतस्य स्वतन्त्रतायै निखिलेऽपि राष्ट्रे सर्वत्रैवोद्बोधनरूप कर्मणि संजीवनी रूपेण समुत्साहिताः दृढ़प्रतिज्ञाश्च

सन्तः राष्ट्रभक्ताः स्वकर्मणि सफल्यं समधिगताः। फलतः अस्माकं राष्ट्रं स्वतन्त्रं सञ्जातम्। एतदर्थं भूरिशो धन्यवादार्हाः सर्वे राष्ट्रभक्ताः संस्कृतकवयश्चेति।

इत्थं च आस्माकीनैः राष्ट्रभक्तैः, मनीषिभिः, सुरभारतीसमुपासकैश्च यादृशः आंग्लशासनविरोध-पुरःसरम् सततप्रयासः विहितः तत्सर्वथा श्लाघनीयः इति मामकीना मतिः। निसर्गतः तेषामेव सतत प्रयासेन संघर्षेण च अस्माकं भारतं स्वतन्त्रं सञ्जातम्। अस्माकं संस्कृतं चेति संवर्द्धित सञ्जातं शनैः शनैः। एतत्सर्वं विलक्षणकार्यमेव राष्ट्रियवृत्तमितिमात्रं विनिवेद्य विरम्यते।

संदर्भा :-

| क्र. पत्रिकाभिधानम् | स्वरूपम् | प्रकाशन स्थानम् | प्रकाशनावधिः |
|---|---|---|---|
| 1. जयन्ती | दैनिकी | त्रिवेन्द्रम् | 1.1.1907-4.1.1907 |
| 2. मञ्जुभाशिणी | साप्ताहिकी | काञ्ची | 1900-1925 |
| 3. सूनृतवादिनी | साप्ताहिकी | कोल्हापुर | 1906-1910 |
| 4. संस्कृत साकेतम् | साप्ताहिकी | अयोध्या | 1920-1947 |
| 5. संस्कृतम् | साप्ताहिकी | अयोध्या | 1930-1947 |
| 6. देववाणी | साप्ताहिकी | कलकत्ता | 1930-1940 |
| 7. मञ्जूषा | साप्ताहिकी | कलकत्ता | 1936-1937 |
| 8. अमर भारती | पक्षिकी | त्रिवेन्द्रम् | 1910-1918 |
| 9. मित्रम् | पाक्षिकम् | पटना | 1918-1925 |
| 10. सूर्योदयः | पाक्षिकी | वाराणसी | 1926-इदानी यावत् |
| 11. सुप्रभातम् | पाक्षिकम् | वाराणसी ?? | |

# तार्तीयषट्प्रमाणमीमांसा

डॉ. प्रभाकरप्रसादः

**नमः प्रमाणमूलाय कवये शास्त्रयोनये।**
**प्रवृत्ताय निवृत्ताय निगमाय नमो नमः॥**

वेदवाक्यार्थविचारोपायभूतन्यायनिबन्धनरूपषट्कद्वयात्मके पूर्वमीमांसादर्शने षट्सङ्ख्याया वैभवं दृश्यत इति विदितमेव। तत्र प्रथमे प्रमाणाध्याये तर्कपादे प्रमेयसत्ताबोधकानि प्रत्यक्षानुमानोपमानशब्दार्था-पत्त्यनुपलब्ध्याख्यानि षट् प्रमाणानि भाट्टमते निरूपितानि। तत्रैव प्रथमेऽध्याये नामधेयपादे तत्सिद्धिपेटिकायां-गौणीप्रवृत्तिनिमित्ततया षण्णिमित्तानि वर्णितानि। द्वितीये भेदाध्याये कर्मभेदकानि शब्दान्तराभ्याससङ्ख्या संज्ञागुणप्रकरणान्तराख्यानि षट् प्रमाणानि स्वीकृतानि। तृतीयाध्याये च विनियोगविधेः सहकारिभूतानि षट्प्रमाणानि चर्चितानि। पञ्चमे प्रयोगविधेः सहकारिभूतानि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि षट्प्रमाणानि वर्णितानि।

अत्र लेखे विनियोगविधेः सहकारिभूतानां प्रमाणानामेव मीमांसा क्रियते। कात्यायनश्रौतसूत्रे जैमिनीयमीमांसायाञ्च षट् प्रमाणानामेतेषां विशदं वर्णनमुपलभ्यते। जैमिनीये दर्शने एतेषां प्रमाणानां तृतीये निरूपणं स्पष्टम्। कात्यायनश्रौतसूत्रे तु यद्यपि प्रथमाध्याये द्वितीयकण्डिकायां "तदङ्गमितरत्-समभिव्याहारप्रकरणाभ्याम्[१]" इत्यत्र सूत्रे वाक्यप्रमाणयोरेव प्रमाणत्वं कण्ठत उक्तम् तथापि तत्र तत्र श्रुत्यादिप्रमाणानामपि उदाहरणानां दर्शनात् श्रुत्यादीनि षट् प्रमाणानि महर्षिसम्मतानीति वक्तव्यम्। अतः कात्यायनश्रौतसूत्रे जैमिनीये दर्शने च विवेचनप्रकारे भेदे सत्यपि श्रुत्यादिप्रमाणानि सन्तीत्यत्र सूत्रकारयोरैकमत्यमेव निश्चीयते। कात्यायनसूत्रे कुत्र कुत्र श्रुत्यादीनां प्रमाणत्वं प्रतिपादितमित्यग्रे विवेचयिष्यते।

सम्प्रति तेषां प्रमाणानां स्वरूपं किञ्चिद्विविच्यते– प्रथमं विनियोगविधिः कः इति विचारणीयम्। तत्र विनियोगो नामाङ्गप्रधानयोः सम्बन्धबोधः। तद्यथा– गणानां त्वा गणपतिमिति गृत्समदः भार्गवः शौनकः ब्रह्मणस्पतिर्जगती गणपतिध्याने विनियोगः इत्यादौ श्रीगणपतिध्यानाख्यकर्मणाङ्गीभूतेन सह मन्त्रोऽयं सम्बद्ध इति सम्बन्धबोधपुरस्सरं मन्त्रः पठ्यते। अनेन मन्त्रोच्चारणस्य असङ्गतत्वशङ्का निवारिता भवति "नासङ्गतं प्रयुञ्जीत" इत्यभियुक्तवचनमपि समादृतं भवति। अत एव विनियोगोच्चारणपूर्वकमेव कर्मानुष्ठेयमिति नियमोऽपि सङ्गच्छते।

---

१. कात्यायनश्रौतसूत्रम् १.२.२

एवञ्चाङ्गिनाङ्गस्य सम्बन्धबोधो विनियोगः, यस्माद्विधेस्तस्य बोधो भवति स विनियोगविधिरित्युच्यत इति सिद्धम्। तदुक्तम्– अङ्गप्रधानसम्बन्धबोधको विधिः विनियोगविधिरिति।[1] पूर्वोक्तोदाहरणे "गणानान्त्वेति तद्ध्यानम्" इत्यादिविधायकं वाक्यम् विनियोगविधिवाक्यमिति वक्तुं शक्यते। अत्र च गणानां त्वेति मन्त्रस्य गणपतिध्यानसम्बन्धो विधीयते। गणानां त्वेति ध्यायेदित्ययं विधिः गणपतिध्याने मन्त्रमिमं नियमयन् नियमविधिर्भवति। एकत्रैवाङ्गप्रधानसम्बन्धबोधकत्वोपाधिना विनियोगविधित्वम्, पक्षेऽप्राप्तस्य मन्त्रस्य नियमनान्नियमविधित्वमित्युभयमपि सङ्गच्छते। अत एव "सर्वे द्रव्यविधयो नियमविधय" इति मीमांसामर्यादापि समुपपद्यते।

अयं विनियोगविधिः स्वविधेयस्याङ्गप्रधानसम्बन्धस्य बोधने षट् प्रमाणानि श्रुतिलिङ्गवाक्य–प्रकरणस्थानसमाख्यारूपाणि अपेक्षते।

तत्र प्रथमं प्रमाणं श्रुतिः। श्रुतिश्च निरपेक्षः शब्दः, साध्यत्वसाधनत्वयोरन्यतरबोधकं द्वितीयातृतीयादिपदम् अर्थात् सर्वा अपि कारकविभक्तयः वाचकताशक्तिश्च श्रुतिपदवाच्याः यथा "दध्ना जुहोती" त्यत्र तृतीयया दध्नः होमाङ्गत्वमवगम्यते। सा च त्रिधा– विधात्री, अभिधात्री, विनियोक्त्री चेति। लिङादिश्रुतिर्विधात्री, इन्द्रादिश्रुतिरभिधात्री। विनियोक्त्री पुनः त्रिविधा– एकप्रत्ययरूपा,[2] एकपदरूपा, विभक्तिरूपा चेति। तत्राद्या– "पशुना यजेत" इत्यत्र तृतीया विभक्तिः करणकारकमेकत्वञ्च वदति, तयोरेकप्रत्ययगम्यत्वात् करणकारकं प्रति गुणभूतायाः एकत्वसङ्ख्यायाः शेषत्वं निश्चीयते। तदुक्तम्–

**समानप्रत्ययस्थेन कारकेणात्मसात्कृता।**
**क्रियायै नीयते सङ्ख्या न पश्वङ्गं पदाद्भवेत्॥** इति[3]

अत्रैकपदश्रुत्या एकत्वसङ्ख्यायाः पश्वङ्गता प्राप्ता, अतः एकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वादिति पूर्वपक्षे प्राप्ते एकप्रत्ययश्रुत्या प्रतिपदिकार्थादपि सन्निहिततरेण प्रधानभूतेन कारकेणावरुद्धमेकत्वं प्रातिपदिकार्थमनादृत्य क्रियाङ्गमवगम्यते इति निर्णीतं चतुर्थप्रथमे पश्वेकत्वाधिकरणे।

एकपदरूपा श्रुतिश्च "यजेत" इति पदे प्रत्ययोक्तभावनां प्रति प्रकृत्युक्तयागस्य शेषत्वं बोधयति। विभक्तिरूपा च श्रुतिर्द्विविधा शेषत्वबोधिका शेषित्वबोधिका चेति। "व्रीहीन् प्रोक्षति" इत्यत्र द्वितीया व्रीहेः प्रोक्षणक्रियां प्रति ईप्सिततमत्वरूपशेषित्वबोधिका। "दध्ना जुहोति" इत्यत्र तृतीया होमक्रियां प्रति दध्नः शेषत्वबोधिका एवञ्च त्रिविधश्रुतिभेदेष्वनुस्यूतं श्रुतिलक्षणं निरपेक्षो रवः

1. मीमांसान्यायप्रकाशः – पृ. सं. ६४
2. मीमांसान्यायप्रकाशे समानाभिधानरूपेति पदेनोक्ता। तदुक्तम् पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम्" इति।
3. शास्त्रदीपिका ४/ १/

इति।तदुक्तम् भाष्ये– "यदर्थस्याभिधानं शब्दस्य श्रवणमात्रादेवावगम्यते स श्रुत्यावगम्यते। श्रवणं श्रुतिः।" इति।[1] वार्तिकेऽप्युक्तम्– त्रिविधा श्रुतिः– विध्युक्तिविनियोगाख्येति"– अत्र विधिपदेन विधात्री श्रुति, उक्तिपदेनाभिधात्री श्रुतिः, विनियोगपदेन च विनियोक्त्री श्रुतिः कथिताः। शास्त्रदीपिकायामप्युक्तम्–"यः शब्दस्य श्रवणादेव विनियोगः प्रतीयते स श्रौत इत्युच्यते" इति। कात्यायनश्रौतसूत्रभाष्येऽपि" स्वार्थाभिधाने निरपेक्षं वचनं श्रुतिः, "सा त्रिविधा विधात्री, अभिधात्री, विनियोक्त्री च" इत्युक्तम्। निरपेक्षरवात्मिकेयं श्रुतिः लिङ्गादिभ्यो बलीयसी। तदुक्तं तृतीयतृतीये बलाबलाधिकरणे – श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षाद् इति।[2]

लिङ्गं नाम सामर्थ्यम्। तच्च द्विविधम्– शब्दगतमर्थगतञ्चेति। तत्र शब्दगतं सामर्थ्यं मन्त्राणामर्थस्माकत्वप्रतिपादनमुखेन प्रथमद्वितीये मन्त्राधिकरणे समर्थितम्। अर्थगतसामर्थ्यञ्च प्रथमचतुर्थे सामर्थ्याधिकरणे स्रुवादीनां पदार्थानां सामर्थ्यानुसारेणावदानादिकार्येषु उपयोगः कार्य इति निरूपणद्वारा प्रतिपादितम्। तृतीयाध्याये च तेषां विनियोगः प्रतिपादितः। तद्यथा "बर्हिर्देवसदनं दामि" इति मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपात् लिङ्गात् लवनशेषता। एवञ्च साध्यत्वसाधनत्वयोरन्यतरस्य कल्पिका योग्यता लिङ्गमिति सिद्धम्। तदुक्तं भाष्ये–[3] "यत्तावच्छब्दस्यार्थमभिधातुं सामर्थ्यं तल्लिङ्गमिति।" वार्तिककारैरप्युक्तम्- "यच्छब्दस्योक्तिसामर्थ्यं तल्लिङ्गमिति।"[4] शेषित्वस्य शेषत्वस्य वा बोधिकया श्रुत्या रहितः पदसमभिव्याहारो वाक्यम्। अत्र समभिव्याहारो नाम सहोच्चारणम्। तद्यथा–"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यत्र पर्णस्य पलाशस्य जुह्वङ्गत्वं वाक्यादेव सिद्ध्यति, अत्र अङ्गत्वस्याङ्गित्वस्य वा बोधिका द्वितीयादिविभक्तिर्न श्रूयते, येन श्रुत्या सम्बन्धबोधः स्यादतः पर्णताजुह्वोस्समभिव्याहारमात्रादेव शेषशेषिभावः कल्प्यते। तदुक्तं "वाक्ये पुनः –

**अर्थं प्रति न सामर्थ्यं न च शेषत्वमुच्यते।**
**केवलः पदसङ्घातः प्रत्यक्षमुपलभ्यते॥"** इति[5]

भाष्येऽप्युक्तम्–"एकार्थमनेकं पदं वाक्यम्।" इति। यद्यपि "पर्णमयी जुहूः" इत्यत्र प्रथमा विभक्तिः श्रूयते तथापि प्रथमायाः प्रातिपदिकार्थमात्रेऽनुशिष्टत्वात् ततः साध्यत्वसाधनत्वयोर्बोधः स्फुटो न भवति किन्तु समभिव्याहारेणैकार्थप्रतिपादकत्वाद् वाक्यविधयैवात्र शेषशेषिभावो निश्चीयते। अत एव सूत्रकारैः एकवाक्यत्वस्य लक्षणं द्वितीयप्रथम एवं प्रादर्शि "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या"–दिति।[6] यावन्ति पदानि प्रधानमेकमर्थमवगमयितुं समर्थानि विभागे साकाङ्क्षाणि तान्येकं

1. जै. सू. ३/१/७
2. जै.सू. ३/३/१४
3. जै.सू. ३/३/१४
4. जै.सू. ३/३/१४
5. वार्तिकम् ३/३/१४
6. जै.सू. ३/१/४६

वाक्यमिति भावः। एवञ्च साध्यत्वसाधनत्वयोरन्यतरस्य कल्पकः पदयोर्योगः वाक्यमिति सिद्धम्।

विधिवाक्यतः कर्तव्यत्वेनावगतस्य केन प्रकारेण कर्तव्यमिति विशिष्याज्ञायमानस्य इतिकर्तव्यताकाङ्क्षा प्रकरणम्। तद्यथा– दर्शपूर्णमासादिकं प्रति प्रयाजादीनामङ्गत्वं ज्ञायते। अयं भावः– पदानां परस्परापेक्षावशात् कस्मिंश्चिद्विशिष्ट एकस्मिन्नर्थे पर्यवसितानां वाक्यत्वमवगम्यते। लब्धवाक्यभावानां पदानां पुनः कार्यान्तरापेक्षावशाद्वाक्यान्तरेण सम्बन्धः प्रकरणम्। एतत् प्रकरणं द्विविधम् महाप्रकरणमवान्तर–प्रकरणञ्चेति। प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं महाप्रकरणात् सिद्ध्यति। अभिक्रमणादीनां प्रयाजादिकं प्रत्यङ्गत्वमवान्तरप्रकरणात् सिद्ध्यति। महाप्रकरणावान्तरप्रकरणयोरयं भेदः फलभावनायाः प्रकरणं महाप्रकरणम्, यथा– दर्शपूर्णमासप्रयाजयोः। फलभावनाया मध्ये यदङ्गभावनायाः प्रकरणम् तद् अवान्तरप्रकरणम् यथा–"अभिक्रामञ्जुहोति" प्रतिप्रयाजमाहवनीयसमीपगमनमभिक्रमणम्, इदं सन्दंशसहकृतेनावान्तरप्रकरणेन प्रयाजस्यैवाङ्गम्। यथा फलभावना साध्यं साधनमितिकर्तव्यता चेत्यंशत्रयमपेक्षते तथा भावनात्वसामान्याद् अङ्गभावनाप्यंशत्रयमपेक्षत इति अवान्तरप्रकरणं सिद्ध्यति। सन्दंशो नाम एकाङ्गानुवादेन विधीयमानयोर्धर्मयोरन्तराले विहितत्त्वम्, यथात्रैव "अतिहायेडो बर्हिः प्रतिसमानयते जुह्वामौपभृतम्" इत्यनेन प्रयाजोद्देशेन समानयनं विधाय "अभिक्रामञ्जुहोति" इति मध्येऽभिक्रमणमाम्नाय पुनः श्रूयते "प्रयाजशेषेण हवींष्यभिघारयति" इति, अत्र प्रथमाङ्गेनोत्तेजिताया यावदुत्तराङ्गसम्बन्धमनुस्यूतायाः प्रयाजभावनेतिकर्तव्यताकाङ्क्षायाः फलभावनापेक्षया बलीयस्याः सत्वात् तयैव मध्यपात्यभिक्रमणस्यापि ग्रहणं सिद्ध्यतीति अवान्तरप्रकरणं सिद्धम्। तदुक्तं वार्तिके– "येनाभिक्रमणादूर्ध्वं प्रयाजानां गुणोऽपरः। विधास्यते प्रयाजानां तस्मात्प्रकरणास्तिता"। इति।

एवञ्च साध्यसाधनयोरन्यतरस्य कल्पकं प्रधानस्य साकाङ्क्षत्वं प्रकरणमिति सिद्धम्।

देशसामान्यं स्थानम्। तद्यथा– "दब्धिरस्यदब्धो भूयासम् "इत्ययं मन्त्रः आग्नेयाग्नीषोमीयमन्त्रद्वय–मध्यपठितः कस्याङ्गमिति जिज्ञासायाम् आग्नेयाग्नीषोमीययागद्वयमध्यानुष्ठेयोपांशुयागस्यैवाङ्गमिति स्थानान्निश्चीयते। अत्र प्रकरणेनेदं दार्शपौर्णमासिकमिति सामान्यतो ज्ञातेऽपि विशिष्य कस्याङ्गमिति ज्ञाने स्थानमेव नियामकमतः स्थानं पृथक् सम्बन्धबोधकं प्रमाणं स्वीकार्यम्। एतद्द्विविधम् यथासङ्ख्यम्, सन्निधिश्चेति। यथासङ्ख्यमत्रैव "दब्धिरसि" मन्त्रस्योपांशुयागाङ्गतां नियमयति। सन्निधिस्तु – आम्नानसन्निधिः, अनुष्ठानसन्निधिरिति द्विविधः। आद्यं यथा– "शुन्धध्वं दैव्याय कर्मणे" इति मन्त्रस्य पाठानुसारेण सान्नायपात्रप्रोक्षणाङ्गत्वं निश्चीयते। अनुष्ठानसन्निधेः पशुधर्माणामग्नीषोमीयाङ्गता निर्णीयते। एवञ्च साध्यसाधयनयोन्यतरकल्पकं पाठादिसान्निध्यं स्थानमिति फलितम्।

समाख्या च यौगिकी संज्ञा। सा द्विविधा लौकिकी वैदिकी चेति। होतृचमसः वैदिकसमाख्यया चमसभक्षणं प्रति होतुः शेषता ज्ञायते। आध्वर्यवमिति याज्ञिकप्रसिद्ध्या अन्वाधानादिकं प्रत्यध्वर्योः कर्तृत्वेन शेषता अवगम्यते। "पुरुषश्च कर्मार्थत्वात्" [जै.सू. ३/१/३/६] इत्यत्र कर्तुरपि परार्थत्वरूपशेषत्वस्य

जैमिनिना स्वीकारात् "यजमानेन संमितौदुम्बरी भवती" त्यत्र तृतीयया कर्तुरपि शेषत्वस्य श्रुतेश्च न दोषः। एवञ्च साध्यसाधनयोरन्यतरस्य कल्पकं यौगिकं हौत्रादिपदं समाख्येति सिद्धम्।

एवमुक्तानां षण्णां प्रमाणानां मध्ये पूर्वं पूर्वं प्रबलमुत्तरमुत्तरञ्च दुर्बलम्, उत्तरोत्तरस्य प्रमाणस्य पूर्वपूर्वप्रमाणकल्पनाद्वारैव विनियोजकत्वादिति बलाबलधिकरणे[1] निर्णीतम्। तत्र श्रुतिः निरपेक्षं प्रमाणमित्युक्तम् तत् कथमिति विचार्यते– न हि श्रुत्यासमर्थस्य विनियोगः सम्भवति, अन्यथा अग्निना सिञ्चेदित्यत्रापि श्रुत्या विनियोगस्य कल्पना स्याद्, अतः श्रुतिः सामर्थ्यं पुरोधायैव विनियुङ्क्त इति स्वीकार्यम्। तेन च श्रुतेः निरपेक्षता कथमिति। अत्रोक्तम्–

**लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनियोक्तृता।**
**श्रुतिज्ञानं पुरोधाय लिङ्गन्तु विनियोजकम्।।** इति।[2]

सामर्थ्यमवगम्य श्रुतेर्विनियोगावधारणं भवेच्चेदेवं स्यात् श्रुतेर्लिङ्गापेक्षेति, परन्तु नैवमस्ति, श्रुतिर्विनियोगाय सामर्थ्यमपेक्षते न सामर्थ्यविज्ञानम्। श्रुत्या विनियोगेऽवगते नासमर्थस्य स इति तन्निर्वाहाय सामर्थ्यं कल्प्यते। तस्मात् श्रुत्या विनियोगे सिद्धे तदन्यथानुपपत्त्या पश्चात् सामर्थ्यं प्रतीयत इति श्रुति-विनियोगात् पराचीना सामर्थ्यप्रतीतिः श्रुत्यनुरोधेनैव निर्णेया। लिङ्गं न स्वतो विनियोजकमपि तु विनियोक्त्रीं श्रुतिं कल्पयित्वा विनियोजकम्। "अग्निना सिञ्चेद्" इत्यत्र शक्तिकल्पनस्य बाधितत्वाद् अप्रामाण्यमेव। अतः श्रुतिः निरपेक्षं प्रमाणम्। तदुक्तम् – प्रत्यक्षे चानुमाने च यथा लोके बलाबलम्। शीघ्रमन्थरगामित्वात्तथैव श्रुतिलिङ्गयोः।।[3] इति। अत्र मन्थरगामिन इत्यस्य आकाङ्क्षाव्याप्त्यादिनिश्चायक-मानान्तरसापेक्षत्वेन विलम्बितफलकस्येत्यर्थः। तेन श्रुत्या शीघ्रं विनियोगे कृते विनियुक्तस्य मन्त्रादेः साध्याकाङ्क्षायां निवृत्तायां लिङ्गस्य तत्साध्यसमर्पकत्वाभावेन बाधो युक्तः। अयमेव तृतीयाध्याये निरूपितः अप्राप्तबाधः। प्राकृतस्याङ्गस्य विकृतौ कार्यमुखेनागतस्य द्वारलोपप्रत्याम्नायप्रतिषेधैः यो बाधः दशमे निरूपितः स प्राप्तबाधः।

एवं विनियोगविधेः सहकारिरभूतानां षण्णां प्रमाणानां भाट्टप्रस्थानानुसारेण जैमिनिसूत्रारूढानां विवेचनं दिङ्मात्रमिह कृतम्। कात्यायनश्रौतसूत्रग्रन्थे अङ्गत्वबोधकप्रमाणानां निरूपणावसरे "तदङ्गमितरत" इति सूत्रेण वाक्यप्रकरणयोः प्रमाणत्वम् उक्तम्। "काष्ठं हिरण्यं वाभिजुहुयात् श्रुतेः" (२५.३.३) "तेषामारम्भेऽर्थतो व्यवस्था" (१-३-४) "मन्त्रलिङ्गाच्च" (९.४.२६) "प्रयाजेषु सन्निधे" (३.३.१५) "उन्नेतोन्नयति समाख्यानाद्" (९.५.३३) इति सूत्रेषु सर्वेषां जैमिनिसम्मतानामपि प्रमाणानां प्रमाणत्वं स्वीकृतम्। एवं सङ्क्षेपतश्चात्र श्रत्यादिप्रमाणानां निरूपणं कृतमिति विरम्यते।

1. वार्तिके ३/१/१०
2. भामती – ३/३/२५
3. वार्तिके ३/३/१

**सिद्धान्तरीतिषु मया भ्रमदूषितेन।**
**स्यादन्यथापि लिखितं यदि किञ्चिदत्र।**
**संशोधने सहृदयाः सदया भवन्तु।**
**सच्छास्त्रतत्त्वपरिशीलननिर्विशङ्काः ॥**

**संदर्भग्रन्थाः –**


१. मीमांसान्यायप्रकाशः।

२. शास्त्रदीपिका।

३. मीमांसादर्शनम्।

४. अध्वरमीमांसाकुतूहलवृत्तिः।

५. भाट्टदीपिका।

६. कात्यायनश्रौतसूत्रम्।

७. तन्त्रवार्त्तिकम्।

# गीतायाः कर्मयोगः वर्तमाने तस्य प्रासङ्गिकता च

**डॉ. प्रवीण कुमारी**

भारतीयाः मनीषिणः सत्यस्य अन्वेषणं मानवजीवस्य लक्ष्यं मन्यन्ते। सभ्यतायाः आदिकालादेव भारतीयाः निसर्गतः आध्यात्मवादिनः, नीतिपरायणाः शान्तिप्रियाश्च। ते प्रारम्भादेव जगतः अथवा बाह्यभौतिकवातावरणस्याध्ययनेन सहैव मानवजीवनस्य गूढ़तमरहस्ज्ञयानाम् प्रयासरता उद्घाटनं विधाय समाजस्य निर्माणाय आसन्। भागवतकारमनुसृत्य "जीवस्य तत्त्वजिज्ञासा" अर्थात् तत्त्वस्य जिज्ञासैव जीवनस्योद्देश्यम्। अतएव भारतीयाः तत्त्ववेत्तारः तत्त्वज्ञानाय सदैव सर्वस्वं जीवनं, धनम्। अभीष्टानि वस्तून्यपि च त्यक्तवन्तः। ते स्वकीयां समग्रां दुःसाध्यतपसाध्यां ज्ञानपरम्परां वाङ्मयमाध्यमेन संसाराय प्राददन्। तेषां सर्वप्रथमं वाङ्मयं वेदरूपम् अद्यापि सर्वत्र स्वकीयं ज्योति प्रसारयति। तेषां वेदानां शिरोरूपाः उपनिषदः भगवतिंगीतास्वरूपेणावतीर्य स्वकीयेनोज्ज्वलालोकेन मानवः जातिः मानवजातिं मार्गं प्रदर्शयन्ति। सम्प्रति श्रीमद्भगवद्गीता विश्वस्य विदुषामाकर्षणस्य केन्द्रभूतास्ति। विश्वधर्मे गीताशास्त्रेण समं किमप्यन्यत् शास्त्रं न विद्यते। आध्यात्मिकान्वेषणदृष्ट्या गीता मानवजीवनाय एकं वरदानमस्ति। विद्त्मसमाजे "गीता सुगीतास कर्तव्या किमन्यैः शास्त्रविस्तरैः" इत्यस्याः उक्तेः सत्यता सर्वत्र अनुभूयते। कर्मभक्तिज्ञानानां त्रिविधां मन्दाकिनीं प्रवाहयन् पवित्रग्रन्थोऽयं भगवद्गीताख्यः, बालगंगाधरतिलकेन तेजसा दीप्तं महार्हं रत्नमित्युक्तम्। भगवता वेदव्यासेन प्रणीतमिदं ग्रन्थरत्नं कर्मयोगस्य उत्कृष्टा कृतिरस्ति।

**कर्मयोगः**

मानवजीवने कदाचित् देशकालपरिस्थितिवशात् एवंविधः धर्मसंकटः उपतिष्ठति यस्य प्रभावात् परम्पराप्रतिष्ठितानां सत्यहिंसाधर्मनीतिन्यायादीनां पालने न केवलं व्यवधानमुत्पद्यते अपितु मानवसनः कर्तव्यभूमिकापथि स्थितोऽपि सहसा करुणासुखदुःखविषादानां अकर्मण्यताकर्तव्यविमूढतादीनां च चक्रे भ्रमति। महाभारतस्य समरभूमौ वीरपुङ्गवः अर्जुनः स्वसमक्षं गुरुजनान्, आचार्यान्, बन्धुबान्धवांश्च प्रेक्ष्य सहसा तादृशीमेवावस्थां प्राप्नोति। सः विषादग्रस्तः किंकर्तव्यविमूढः सन् युद्धात् व्यरमत्। तदा श्रीकृष्णः तमवबोधयन् अवादीत् – हे पार्थ! अशोच्ये वस्तुनि शोचसि प्रज्ञावत इव च भाषसे।[1] ततः परं श्रीकृष्णः अर्जुनं कर्मयोगमुपादिशत्।

1. अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः।। गीता–2.11

'कर्मयोगः' इत्यत्र पदद्वयं विद्यते प्रथमं 'कर्म' यच्च 'कृ' धातोः निष्पन्नः। यस्य सामान्योऽर्थः 'करणम्', 'व्यापारः' क्रियादि वा भवति। गीतायामपि 'कर्म' शब्दः उक्तार्थकः एव प्रयुक्तः। तत्र कर्मणः इदं लक्षणम् उक्तं यत् – अक्षरात् परब्रह्मणः पञ्चमहाभूतादीनां विविध- सृष्टिनिर्माणानां या प्रक्रिया तदैव तत एव कर्म।[1] कर्म मानवजीवने अपरिहार्यं, यतः मनुष्यः स्वभावदेव कर्मशीलः अस्ति। सः क्षणमात्रमपि निष्क्रियः, कर्मरहितो वा नैव तिष्ठति।[2] कदाचित् सः शारीरिककार्येषु संलग्नो भवति, कदाचित् सः चिन्तनमननादिमानसिकव्यापारेषु संसक्तः दृश्यते। सत्यं त्विदं यत् कार्यं बिना जीवनयात्राप्यसम्भवा। गीतायां श्रीकृष्णः अकथयत् – हे अर्जुन! त्वं कर्म कुरु, कर्म विना शरीरस्य निर्वाहोऽपि न भवति।[3] ऐतरेय ब्राह्मणेऽपि उक्तं यत् गतिशीलः जनः कृतयुगः अर्थात् सर्वश्रेष्ठः अस्ति।[4] अस्मात् कारणात् कर्म अवश्यं करणीयम्। कर्मणः अनुष्ठानस्य रीतिः, कुशलता, पटुत्तैव 'योग' इत्युच्यते। योगशब्दोऽयं 'युज्' धातोः निष्पन्नः। यस्य अर्थः योजनं, मेलनं, ऐक्यं वा इति भवति। 'योग' शब्दस्य अर्थाः अमरकोशे प्रकारेणानेन उक्ताः सन्ति – "योगः संहनोपायध्यानसंगति-युक्तिषु"[5] योगक्षेमः पदेऽत्र योगशब्दस्यार्थः "अप्राप्तस्य प्राप्तिः इति भवति"[6] गीतायां भगवान् श्री कृष्णः योगशब्दस्य निश्चितांप्रामाणिकीं व्याख्यां कुर्वन् कथयति– "योगः कर्मसु कौशलम्"[7] अर्थात् कर्मविशेषस्य कौशलं, वैशिष्ट्यं चातुर्यं वा 'योग' इत्युच्यते। शाङ्करभाष्येऽपि "कर्मसु कौशलम् इत्येवार्थः शंकराचार्येण स्वीकृतः।"[8] विषादग्रस्तं अर्जुनं श्री कृष्णः साङ्ख्यशास्त्रमनुसृत्य युद्धस्य अनिवार्यत्वं प्रतिपाद्य पश्चात् कर्मयोगविधिना तम् अवबोधयत्।[9] सः अभाषत यत् ये जनाः सर्वदा यज्ञयागादिकाम्यकर्मसु निरताः तेषां बुद्धिः फलाशया व्यग्रा भवति अतः गीतायां श्रीकृष्णः अर्जुनं

---

1. अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।
   भूतभावोद्भवकरो विसर्गः कर्म सञ्जितः।। गीता-8.3
2. न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
   कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः।। गीता-3.5
3. नियतं कुरु कर्म त्वं कर्म ज्यायोह्यकर्मणः।
   शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः।। गीता-3.8
4. कलिः शयानो भवति, संजिहानस्तु द्वापरः।
   उत्तिष्ठंस्त्रेता भवति, कृतं सम्पद्यते चरन्।। ऐतरेय ब्राह्मण-33.4
5. अमरकोशः - (3.3.22)
6. अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
   तेषां नित्यनित्याभियुक्तानां योगक्षेमं वहाम्यहम्।। गीता-9.22
7. बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
   तस्माद्योगाय युज्यस्व योगः कर्मसुकौशलम्।। गीता-2.50
8. श्रीमद्भगवद्गीतारहस्य अथवा कर्मयोगशास्त्र, पृ. 47
9. एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु।
   बुद्धया युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि।। गीता-2.38

कथयति 'त्वं स्वकीयां बुद्धिं अव्यग्रां, स्थिरां, शान्तां विधाय आसक्तिं त्यज परं कर्मत्यागाग्रहे आत्मनं न स्थापय। फलाशारहितः योगस्थश्च भूत्वा कर्माणि आचर।[1]

कर्म बन्धनस्य हेतुः विद्या च मुक्तेः हेतुरस्ति। प्रवृत्तिनिवृत्तिमार्गाविव कर्मयोगस्य आधारशिलाभूतौ स्तः। नरः फलेच्छया आसक्त्या च कर्मणा निबध्यते। असौ आसक्तिरहितः बाह्येन्द्रियैः कर्माण्याचरेत् चेत् सः मुक्तो भवति। अतः स्पष्टमेव यत् निष्कामभावेन फलेच्छारहितः सन् स्वकार्यसम्पादनं कर्मयोगः। फलासक्त्या कृतानां कर्मणां फलं भोक्तुं कर्ता बाध्यः अस्ति, किन्तु निष्कामकर्माणि तथैव फलं न प्रयच्छन्ति यथा भर्जितं बीजं अंकुरितं न भवति न च फलं ददाति। अनेन प्रकारेण वयं पश्यामः अनुभवामश्च यत् फलाशां विहाय पूर्णशारीरिकमानसिकशक्त्या कर्मानुष्ठानस्य दिव्यसन्देशः श्रीमद्भगवद्गीतया प्राप्यते। कृतकर्मणः यदपि शुभाशुभमिष्टमनिष्टं वा फलं प्राप्येत् तत् हर्षशोकादिद्विन्द्वरहितेन कर्त्रा स्वीकरणीयम्। अग्रे श्रीकृष्णः उपदिशति यत् सुखदुःखौ, लाभहानी, जयपराजयौ प्रति समत्वभावं धारयन् जीवनसंग्रामे संघर्षितुम् तत्परो भव।[2]

वस्तुतः कर्मफलं प्रति रागद्वेषौ एव मानवं बध्नीतः। एतौ मानवमनसि व्यग्रतामपि उत्पादयत्तः। फलासक्तेः वास्तविकः सन्यासः। कर्मफलस्य त्यागः संन्यासौ वा कर्मयोग आद्या त्यागः एव अवस्था। एवं निरन्तरं कार्याभ्यासेन कर्मयोगस्य साधनेयं परिपक्वा भवति। तदा मनुष्यः सर्वप्रकारकान् संकल्पविकल्पकान् परित्यज्य समबुद्ध्या कर्माण्याचरति।[3] तदानीं कृतकर्मणः अभीष्टपरिणामप्राप्तावपि तस्य तत् आसक्तिः न भवति। सर्वासु अवस्थासु तस्य जनस्य बुद्धिः स्थिरा सन्तुलिता च तिष्ठति।[4]

निष्कामकर्मयोगनॆ सममिचत्ततां प्राप्य निरन्तरं साधनारतः कर्मयोगी बहुकालान्तरं आत्मज्ञानं प्राप्नोति, ततः पमसौ जगतः जड़चेतनादिसकलपदार्थेषु तदेव आत्मतत्त्वं पश्यति। किञ्चासौ सर्वान् स्वात्मनि आत्मानं च सर्वेषु पश्यति।[5] यः जनः ममत्वासक्तिकामक्रोधलोभमोहादिरहितः स्ववर्णाश्रमस्वभावपरिस्थितिं अनुसृत्य शास्त्रविहितं कर्तव्यमाचरति स एव कर्मयोगी। अतः स्पष्टमेव यत् जीवनविकासस्य जीवनसाफल्यस्य च एकमात्रं साधनं रामबाणवत् कर्मयोग एवस्ति।

---

1. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
   मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।।
   योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
   सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते।। गीता-2, 47.48
2. सुख:दुखे समे कृत्वा लाभालाभौ जयाजयौ।
   ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि।। गीता-2.38
3. यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
   न ह्यसन्नयस्तसङ्कल्पो योगी भवति कश्चन।। गीता-6.2
4. दुःखेष्वनुद्विग्रमनमनाः सुखेषु विगतस्पृहः
   वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।। गीता-2.56
5. सर्वभूतस्थमात्मानं सर्वभूतानि चात्मानि।
   ईक्षते योगयुक्तात्मा सर्वत्रसमदर्शनः।। गीता-6.29

**वर्तमाने कर्मयोगस्य प्रासङ्गिकता**

लौकिके व्यावहारिके च जीवने साफल्यमधिगन्तुं कर्मयोगस्य सिद्धान्तः तर्कसंगतः एवं बुद्धिग्राह्यः एकः सर्वोत्तमः उपायः। संस्थाशीर्षस्थानां, प्रमुखाधिकारिणां, नेतॄणां अधीनस्थकर्मचारिणां सामान्यजनानां सर्वेषामेव सफलतायाः मन्त्राः अत्र निहिता निःसन्ति। श्रीकृष्णः कथयति यत् मनुष्यः कर्मकर्तुमेव अधिकृतः फलप्राप्तौ तस्याधिकारः नास्ति।[16] कर्मफलप्राप्तिः केवले कर्तरि न अपितु अनेकत्र आश्रितास्ति। फलेच्छया, फलाशया तदा आसक्त्या कृतस्य कर्मणः यदि फलं न प्राप्यते तथा कर्तुः मनः अत्यन्तं सीदति। असफलतायाः कारणानि प्रत्यपि रोष उत्पद्यते। खिन्नस्य रुष्टस्य मानवस्य वपुषि मनसि च विविधाः रोगाः उत्पद्यन्ते। अवस्थायामस्यां निष्कामकर्मणः सिद्धान्तः आत्मप्रबन्धने सहायको भवति। फलप्राप्तिः कर्तुः अधीनाः न, अत असौ सफलतायाः असफलतायाः वा चिन्तां विहाय कर्तव्यनिष्ठया स्वकार्यं कुर्यात्। अथ च यदि जनः उक्तप्रकारकमनःस्थित्या स्वकर्माचरति तदा कृतकर्मणः गुणवत्त्वं उन्नतं श्रेष्ठं च भवति। यतो हि तत्र कर्तुः सम्पूर्णा ऊर्जा क्षमता दक्षता च कार्यपूर्तिं प्रति परिपूर्णतया संलग्ना 'भवति।' सम्पूर्णचेतनया कृतं कर्म अत्युत्तमत्वात् उत्तमं फलं प्रयच्छति।

अद्यत्वे प्रत्येकं क्षेत्रे अनुशासनहीनतां, भ्रष्टाचारं, कर्मनिष्ठाभावं, संसाधनदुरुपयोगं, अभीष्टलक्ष्याप्राप्तिप्रभृतिसमस्याः लोके अहर्निशं पश्यामः अनुभवामः च। सर्वासामासां समस्यानां समाधानं न कश्चिदधिकारी अधीनस्थः कर्मचारी वा न जानाति। विषयेऽस्मिन् गीताकथयति–

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते।।** (3.21)

अर्थात् सामान्यो जनः महापुरुषाननुकरोति। अतः अधिकारिणः श्रेष्ठजनाः वा समुचितमाचरणं कुर्युः चेत् तदा अधीनस्थाः अनुचराः आश्रिताः कर्मचारिणश्चापि समुचितं आचरेयुः। तथा तैः एतादृशः प्रयासः करणीयः येन अधीनस्थाः कर्मचारिणः प्रसन्नचेतसः सोत्साहाः च भवेयुः। अनुकार्यः अधिकृतो जनः रागद्वेषादिरहितः पक्षपात- रहितश्च भूत्वा स्वकीयं कर्तव्यमाचरेत्। गीतायामेकत्र उक्तं यत् सदसद्विवेकिनः, गवि, शुनि, ब्राह्मणे, चाण्डाले सर्वत्र समानभावेन पश्यन्ति।[17] एवं शीर्षस्थाः अधिकारिणोऽपि अधीनस्थेषु कर्मचारिषु भेदभावं न कुर्युः। शीर्षस्थाः अधिकारिणः स्वस्वविभागेषु समत्वबुद्धियुक्तं कार्यविधिं स्वीकुर्युः तदा ते कर्मचारिभिः अधिकं गुणवत्तापूर्णं प्रकृष्टं च कार्यं कारयितुं सक्षमाः भवेयुः। एवं वयं पश्यामः यत् गीतोक्तः कर्मयोगः अधिकारिगणेभ्यः विलक्षणं दिशाबोधं प्रददाति। एवमेव अधीनस्थाः कर्मचारिणः एवं श्रमिकाः अपि गीतया दिशाबोधं प्राप्तुं

---

16. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।। गीता-2.47
17. विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि च श्वपाके च पंडिताः समदर्शिनः।। गीता-5.18

शक्नुवन्ति। इदानीं यत्र तत्र सर्वत्र एव श्रमिकसंघानामान्दोलनं कार्यावरोधादिकं भूरिशः दृश्यते। श्रमिकवर्गः कर्तव्यं प्रति उदासीनः अधिकारेभ्यश्च सचेष्टः दृश्यते। यद्येते गीतोक्तां कर्मनिष्ठां मनसि धारयेयुः फलं प्रति निःस्पृहाः भवेयुः तदा कार्यशालासु अधिकतमं उत्पादनं भविष्यति, लाभाधिक्यं च भविष्यति। तेन च श्रमिकाः अपि लाभान्विताः भविष्यन्ति।

अद्यत्वे अस्मदीये समाजे निष्कामकर्मयोगसाधनायाः महती आवश्यकतास्ति। आधुनिकः जनः परिश्रमं विना एव फलं प्राप्तुमिच्छति। शीघ्रातिशीघ्रं धनपतेः कुबेरस्य पदवीं अधिगन्तुं चेष्टते। स्वस्य इच्छासु इन्द्रियेषु च नियन्त्रणं नास्ति। भोगवादस्य विषयानुगामिन्याः जीवनशैल्याः प्रभावोऽयं यत् सर्वत्र समाजे चौर्यं, दस्युत्वं, अपहरणं, षड्यन्त्रं उत्कतोचादिकाः विभिन्नाः अपराधाः प्रत्येकं क्षेत्रं व्याप्नुवन्ति। अस्यां विषमपरिस्थित्यां लोकमिमं कर्मसिद्धान्तस्य आस्था गीतोक्तनिष्कामकर्मयोगशिक्षा च उद्धर्तुं शक्नोति। अतः स्पष्टमेव यत् आधुनिकविश्वमानवाय कर्मयोगस्य सिद्धान्तः आत्मानुशासने आत्मप्रबन्धने च अत्यन्तं सहायकः यं स्वीकृत्य मानवः सन्तुलितं शान्तिपूर्णं च जीवनं यापयितुं शक्नोति।

# वैदिक वाङ्मय में सूर्य तथा उसकी वैज्ञानिक विशेषताएँ

**चन्दा कुमारी**

वैदिक साहित्य का क्षेत्र अत्यन्त विस्तृत है जो संहिता, ब्राह्मण, आरण्यक, उपनिषद् के नाम से अभिहित है। जनमानस में एक भ्रान्ति धारणा है कि वेद में केवल धर्म,यज्ञ का विवेचन है, या तो देवताओं की स्तुति है परन्तु सूक्ष्म दृष्टि से देखें तो वेद सभी विद्याओं का ग्रंथ है और इसमें सभी ज्ञान-विज्ञान भरे हुए हैं। वेदों के विषय में मनु का यह वचन सत्य एवं सारगर्भित है कि- "सर्वज्ञानमयो हि सः।" यह वचन इस बात की पुष्टि करता है कि वेदों में सभी प्राचीन एवं अर्वाचीन विद्याओं के सूत्र विद्यमान हैं। ये मानव जाति के प्रकाश स्तम्भ और शक्ति के स्रोत हैं। वेद मानव मात्रा के लिए विकास और शोध का मार्ग प्रशस्त करता है। वेद में जहाँ धर्म, आचारशिक्षा, नीतिशिक्षा, सामाजिकजीवन, राजनीतिशास्त्र, अर्थशास्त्र, स्थापत्यकला आदि से समबद्ध पर्याप्त जानकारी उपलब्ध है वहीं विज्ञान के विविध अंगों से सम्बन्धित सामग्री भी पर्याप्त मात्रा में उपलब्ध है।

वास्तव में वेदों में भूगर्भ विद्या, गणित, ज्योतिष, खगोल, भौतिकी रसायन, जन्तु, वनस्पति कृषि, पर्यावरण आदि विषय बहुलता से प्राप्त है जो आध्यात्मिक तथा अधिदैविक शब्द से व्यवहृत होते रहे हैं किंतु वेदों में प्राप्त ये वैज्ञानिक संकेत इतने दुरूह हैं कि उन्हें समझना आसान नहीं है। यदि आधुनिक विज्ञान वस्तुवाद प्रधान है तो वैदिक विज्ञान आध्यात्मप्रधान यही वेद तथा विज्ञान का अन्तर है।

विज्ञान अर्थात् "विशिष्ट ज्ञानम् इति विज्ञानम्"। वास्तव में विज्ञान प्रकृति और उसकी शक्तियों के पीछे छिपे हुए नियमों के अध्ययन का नाम है। विज्ञान की दो शाखाएँ हैं -

1 प्राकृतिक विज्ञान

2 सामाजिक विज्ञान

प्राकृतिक विज्ञान वह विज्ञान है जिसमें पदार्थ और प्रकृति का वैज्ञानिक अध्ययन किया जाता है। प्राकृतिक विज्ञान की एक शाखा भौतिक विज्ञान है जिसके अंतर्गत ब्रह्माण्ड में स्थित वस्तुओं क्रियाओं और उन्हें प्रभावित करने वाले कारकों का अध्ययन किया जाता है। अतः पदार्थ का अध्ययन करने वाले समस्त विज्ञानों को भौतिक विज्ञान कहते हैं। अर्थात् प्रकृति में विद्यमान पदार्थ के क्रमगत अध्ययन को ही भौतिक विज्ञान कहते हैं। भौतिक विज्ञान के अंतर्गत शक्ति, गति, उर्जा, सामर्थ्य, ताप, ध्वनि, प्रकाश, चुम्बकत्व, विद्युत्, नाभिकीय उर्जा आदि विषयों पर विचार

किया जाता है। पदार्थ विज्ञान का नियम है कि कोई भी पदार्थ अपने आप नूतन स्वरूप धारण नहीं करता और न तो किसी पदार्थ का सम्पूर्ण नाश होता है। इसमें हमें सत् असत् का आभास मिलता है। गीता भी पदार्थ विज्ञान के इस नियम को स्पष्ट शब्दों में प्रस्तुत करती है–"विश्व में असत् जैसी कोई चीज नहीं है और सत् का अभाव नहीं है। किसी भी वस्तु का उद्भव अभाव से नहीं हो सकता।[1] यही बात सांख्यदर्शन के सत्कार्यवाद में कही गई है–[2]

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।।**

वैदिक वाङ्मय के अनुसार सम्पूर्ण विश्व का प्रथम वैज्ञानिक अथर्वा ऋषि को माना गया है। अथर्वा ऋषि ने ही उर्जा के प्रतिनिधि स्वरूप अग्नि से सम्बन्धित तीन अविष्कार किये थे। वैदिक साहित्य में सूर्य का जो वर्णन हमें प्राप्त होता है, उससे हमें अनेक वैज्ञानिक तथ्य की जानकारी मिलती है जिसे आज के वैज्ञानिक नवीन शब्दों में प्रस्तुत करते हैं।

सूर्य की उत्पत्ति और उसके उत्पत्ति क्रम की जानकारी हमें वेद में पुरुष सूक्त में प्राप्त होता है–[3] "चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत्।" वेदों में सूर्य और सौर उर्जा के विषय में विस्तृत सामग्री प्राप्त होती है। इसमें सूर्य का महत्त्व, सूर्य अनेक, सूर्य की शक्ति का आधार, सूर्य और चराचर का सम्बन्ध, सौर उर्जा के विविध चमत्कार आदि का वर्णन मिलता है। अतः वेदों के अनुसार हमें सूर्य के न केवल धार्मिक स्वरूप का ज्ञान प्राप्त होता है बल्कि उसमें निहित वैज्ञानिकता की भी जानकारी प्राप्त होती है जो प्रस्तुत शोध पत्र का उद्देश्य है।




1. गीता 2/16
2. सांख्यकारिका का.9
3. ऋग्वेद 10/90/10

ऋग्वेदादि में उल्लेख मिलता है कि सूर्य चर तथा अचर सारे संसार की आत्मा है, अर्थात् सारे संसार की उर्जा का स्रोत है, यह तेजस्विता, ओज, कान्ति, गतिशीलता, बल, आत्मशक्ति का प्रतीक है –"सूर्य आत्मा जगतस्तस्थुषश्च।"[1] वैज्ञानिक भी सूर्यतत्त्व को सर्वोपरि मानते हैं। सूर्य सौरमण्डल के ग्रहों, उपग्रहों, नक्षत्रों आदि का पूर्णतया नियन्ता हैं। वही सौरमण्डल को उर्जा तथा प्रकाश देता है तथा अपनी आकर्षण शक्ति से पृथिवी आदि सभी ग्रहों को नियन्त्रित तथा आकर्षित किए हुए है। सूर्य की उर्जा से ही चराचर संसार में प्रगति उन्नति विकास तथा समृद्धि सम्भव है। यह सूर्य अपनी सूक्ष्म और पवित्र किरणों से सारे वायुमण्डल को शुद्ध करता है। वेद में भी इस विषय में कहा गया है–"सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः।"[2] और इसी प्रसंग में अथर्ववेद में वर्णित है कि अदिति के पुत्र सूर्य और चन्द्रमा जीवन के रक्षक हैं–"आदित्यौ रक्षतां सूर्याचन्द्रमसावुभा।"[3]

सूर्य एक महान् अग्निपुंज अर्थात् कभी न समाप्त होने वाला तेज पुंज है। यह मित्र रूप से ताप देता है और वरूण रूप से ताप खींचता है। सूर्य क्रिया भेद के कारण नाना देवों के रूप में कल्पित किया जाता है। विश्व में चैतन्य का संचरण करने हेतु वही सविता है तो लोकों को नाना व्यापारों में प्रेरित करने से वही विष्णु है।

वैज्ञानिकों के अनुसार चन्द्रमा में स्वयं का प्रकाश नहीं है । सूर्य चन्द्रमा को प्रकाश देता है अर्थात् सूर्य की किरणों से चन्द्रमा प्रकाशित है। यही बात आचार्य यास्क ने निरुक्त में कही है –"सूर्य की किरणों चन्द्रमा से प्रकाशित होता है–"सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः।"[4] तथा "अस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते। आदित्यतोऽस्य दीप्तिभर्वति।"[5] आज के वैज्ञानिक मानते हैं कि सूर्य समस्त दृष्ट या अदृष्ट प्रदूषणकारक कृमियों को नष्ट करता है अर्थात् सूर्य प्रदूषण नाशक हैं। वेद भी इसी बात को कहता है–

**उत्पुरस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा।**
**दृष्टांश्च ध्नन्दृष्टाश्च सर्वांश्च प्रमृणन् कृमीन्।।**[6]

**सूर्य उर्जा का आधार** – वैज्ञानिकों की मान्यता है कि सौरमण्डल सात हैं, वेद में इस बारे में कहा गया है –"सप्त दिशो नाना सूर्याः। देवा आदित्या ये सप्त।[7] जिसे आज के वैज्ञानिक हाइड्रोजन कहते हैं और ऐसा मानते हैं कि सूर्य की उर्जा का आधार हाइड्रोजन है वेद में उसे सोम

1. ऋग्वेद 1/115/1
2. यजुर्वेद 4/4
3. अथर्ववेद 8/2/5
4. यजुर्वेद 18/406
5. निरुक्त 2/6
6. अथर्ववेद 5/23/6
7. ऋग्वेद 9/114/3

कहा गया है तथा वर्णन है कि सूर्य की उर्जा का आधार सोम है या सोम से सूर्य को शक्ति मिलती है-"सोमेन आदित्या बलिन: ।"[1] और इसी को यजुर्वेद में दूसरे रूप में वर्णित किया गया है -

**अपां रसम् उद्वयसं सूर्ये सन्तं समाहितम्।**
**अपां रसस्य यो रसस्तं वो गृहणाम्युत्तमम्।।**[2]

अर्थात् सूर्य में हमें दो तत्त्व प्राप्त होते हैं - 1. "अपां रसम्" अर्थात् जल का सार भाग जो उर्जा के रूप में है। तथा प्रस्तुत मंत्रा में उद्वयस शब्द उर्जा को या गैस को बताता है। तथा जल का यही सार भाग हाइड्रोजन है। हाइड्रोजन के लिए "अपां रस:" इस पारिभाषिक शब्द का प्रयोग किया गया है। 2. "अपां रसस्य यो रस:" का अर्थ है- जल के सार भाग का सार भाग। और जल का सार भाग हाइड्रोजन है और उसका सार भाग हीलियम है। अर्थात् "अपां रसस्य यो रस:" के लिए पारिभाषिक शब्द हीलियम का प्रयोग किया गया है। तथा मंत्र में "सूर्ये सन्तं समाहितम्" के द्वारा स्पष्ट किया गया है कि हिलियम तथा हाइड्रोजन दोनों तत्त्व सूर्य में विद्यमान है जो आज के वैज्ञानिक भी मानते हैं। आधुनिक विज्ञान के अनुसार सूर्य में 90 : हाइड्रोजन है 8: हिलियम और 2: अन्य द्रव्य। सूर्य की सतह का तापमान 6 हजार डिग्री सेन्टीग्रेड है और अन्दर के हिस्से का तापमान लगभग 1 करोङ 30 लाख डिग्री सेन्टीग्रेड है। इस आन्तरिक ताप के कारण हाइड्रोजन हिलियम के रूप में परिवर्तित हो जाता है और इसे Thermo-nuclear Reaction कहा जाता है। गैसों के इस रूपान्तरण के कारण ही सूर्य को निरन्तर विशाल उर्जा प्राप्त होते रहती है तथा सूर्य को अपनी इस उर्जा के लिए प्रति सेकेण्ड 50 लाख टन द्रव्यमान की आवश्यकता होती है।

ऋग्वेद में दीर्घतमा ऋषि का कथन है कि मैनें योगदृष्टि से देखा है कि सूर्य के चारों ओर दूर-दूर तक शक्तिशाली गैस फैली हुई है और यहाँ शक्तिशाली गैस के लिए "शकमयं धूमम्" शब्द का प्रयोग किया गया है-

**शकमयं धूमम् आराद् अपश्यम् विषूवता पर एनावरेण।**[3]

**सूर्य की किरणें** - जैसा कि ऊपर कहा जा चुका है कि वैज्ञानिकों का कहना है कि सात सौरमण्डल हैं, वेद में इस बारे में कहा गया है कि ब्रह्म में सात सूर्य एक साथ रहते हैं -"यस्मिन् सूर्या अर्पिता: सप्त साकम्।[4] वेदों में वर्णन है कि सूर्य के रथ को सात अश्व खिंचते हैं वहीं वैज्ञानिकों के अनुसार ये सूर्य से सात रंग की किरणें निकलती है। इन सात किरणों का वैज्ञानिक दष्टि से बहुत महत्त्व है। प्रत्येक किरण का अलग अलग प्रभाव है। ये किरणें संसार के सभी पदार्थों को रूप रंग देती हैं तथा विभिन्न रोगों को नष्ट करती है। कृषि की उपज को घटाने तथा

---

1. अथर्ववेद 14/1/2
2. यजुर्वेद 9/3
3. ऋग्वेद 1/164/43
4. अथर्ववेद 13/3/10

बढाने में यह पूर्णतया सहायक होती है। इन तरंगों की लम्बाई और आवृत्ति भी अलग अलग है-

| **नाम** | **प्रभाव** |
|---|---|
| बैंगनी | शीतल लाल कणों की वर्धक और क्षय रोग नाशक |
| नीली | पित्तज रोगों की नाशक तथा पौष्टिक शीतल |
| आसमान | पित्तज रोगों की नाशक तथा ज्वरनाशक शीतल |
| हरी | रक्तशोधक समशीतोष्ण तथा वातज रोगों की नाशक |
| पीली | हृदय एवं उदर रोग नाशक तथा कफज रोगों की नाशक तथा उष्ण |
| नारंगी | मानसिक शक्तिवर्धक तथा कफज रोगों की नाशक तथा उष्ण |
| लाल | अति उष्ण उत्तेजक कफज तथा जलीय रोगों की नाशक तथा मालिश हेतु- |

**मूल रंग तीन** - अर्थात् मूल रंग तीन ही होते हैं लाल पीला और नीला शेष रंग इनके मिश्रण से बने होते हैं । ऋग्वेद में वर्णन है कि सूर्य की किरणों के साथ मित्र और वरुण एक ही रथ पर बैठकर चलते हैं । मित्र शब्द धनात्मक आवेश और वरुण ऋणात्मक आवेश के लिए है। इसे ही आज के वैज्ञानिक Electro-magnetic-Radiation कहते हैं तथा इससे विद्युत चुम्बकीय तरंग ( Electro magnetic waves ) प्रवाहित होती है। ये तरंगें बिना किसी सहारे के आकाश में विचरण करती हैं। प्रकाश तरंगें एक ही हैं परन्तु उनमें आवृत्ति और दैर्ध्य के आधार पर अन्तर आ जाता है।

1 कास्मिक किरणें- ये ब्रह्मांडीय अतिसूक्ष्म किरणें हैं।

2 गामा किरणें - ये रेडियम से प्राप्त होती हैं।

3 एक्सरे - ये धातुओं को भी पार कर जाती है।

4 पराबैंगनी किरणें- ये अदृश्य किरणें हैं।

वेद में इन तरंगों की प्रवाह शक्ति के लिए दूत शब्द का प्रयोग हुआ है-"प्रयो वां मित्रावरुणाऽजिरो दूतो अद्रवत्।"[1] सूर्य की ये किरणें सभी पदार्थों को रंगरूप देती हैं। सूर्य की किरणों के द्वारा हमें वेद में प्रकाश संश्लेषण कि क्रिया का भी उल्लेख प्राप्त होता है। आज के वैज्ञानिक भी यही मानते हैं कि सूर्य के कारण ही सभी प्रकार के वृक्षों में फल फूल तथा भोजन बनने कि प्रक्रिया सम्पन्न होती है। अर्थात् सूर्य की किरणों की उपस्थिति में पत्ते पौधें के लिए भोजन बनाते हैं।

आचार्य वराहमिहिर ने वृहत्संहिता में इन्द्रधनुष के निर्माण की प्रक्रिया दी है कि किस प्रकार सूर्य की सात रंग की किरणें इन्द्रधनुष बनाती हैं-[2]

1. ऋग्वेद 8/101/3
2. बृहत्संहिता 35/1

**सूर्यस्य विविधवर्णा पवनेन विघट्टिताः कराः साभ्रे।**
**वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः॥**

अर्थात् सूर्य की विविध रंग वाली किरणें जब मेघयुक्त आकाश में वायु से टकराकर छिटकती हैं तब धनुष का रूप धारण कर लेती हैं और तब इसे इन्द्रधनुष कहते हैं।

आधुनिक विज्ञान के अनुसार जब सूर्य की सात किरणें जब (prism) त्रिकोणीय शीशे में होकर निकलती हैं तो वे फट जाती हैं और सात रंगों में बँट जाती हैं। यूरोप में सबसे पहले इसे न्यूटन ने जाना था। इन सात किरणों में से जो किसी पदार्थ से होकर निकलती है वह उसी रंग की दिखती है। उदाहरणतया-एक अंधेरे कमरे के दरवाजे में यदि छोटा सा छेद का दिया जाए तो इस छेद से होकर जो सूर्य की किरणें जाएँगी वे धरती पर पड़कर सूर्य का एक गोल प्रतिबिम्ब बनाएँगी। अब यदि इन किरणों के बीच में एक तिकोना काँच का टुकड़ा रख दिया जाए तो किरणें इस काँच से निकलने पर फटकर इन्द्रधनुष के समान सात रंग की हो जाएँगी। उनका क्रम इस प्रकार है -लाल, नारंगी, पीला, हरा, आसमानी, नीला, बैंगनी। इससे न्यूटन ने यह जाना था कि सूर्य के प्रकाश में सात रंग की किरणे मिली हुई हैं और उनके मिलने से ही सफेद धूप होती है और अलग-अलग हो जाने से प्रत्येक किरण अपने रंग की दिखाई देती है ।

वैज्ञानिकों के अनुसार सूर्य की किरणों से आक्सीजन (Oxygen) मिलता है तथा सूर्य कार्बन डाइआक्साइड (carbon dioxide) अर्थात् प्रदूषण को समाप्त करता है। यजुर्वेद में इस बारे में कहा गया है सूर्य में प्राण अर्थात् (Oxygen) तथा अपान अर्थात् (carbon dioxide) दोनों शक्तियाँ हैं सूर्य हाइड्रोजन को जलाता है और उससे आक्सीजन अर्थात् प्राण वायु को देता है। सूर्य की उष्मा का रहस्य है- प्राण और अपान का निरन्तर परिवर्तन अर्थात् प्राण से अपान और अपान से प्राण तथा पुनः प्राण से अपान का क्रम -"अन्तश्चरति रोचनास्य प्राणादपानती ।"[1]

पुनः वेद में सूर्य को प्रदूषण नाशक भी कहा गया है-" वह दृष्ट और अदृष्ट सभी प्रकार के कृमियों को नष्ट करता है ।"[2] तथा सूर्य अपनी सूक्ष्म और पवित्र किरणों से सारे वायुमंडल को शुद्ध करता है -"सविता पुनातु अछिद्रेण पवित्रेण सूर्यस्य रश्मिभः।"[3] वैज्ञानिकों के अनुसार सूर्य भारी उर्जा उत्पन्न करता है और सूर्य ही ऐसा वातावरण उतपन्न करता है जिससे पृथिवी पर उसका तापक्रम पहुँचते ही हानिकारक जन्तुओं का नाश हो सके। सबसे अधिक हानिकारक उर्जा जो बाहर आजी है उसे (cosmic rays) कहते हैं।

**प्रकाश की गति** - सूर्य के प्रकाश की गति के विषय में वेदों में अनेक मंत्रा उद्धृत हैं। प्रकाश की गति के विषय में आचार्य सायण ने लिखा है-[4]

---

1. यजुर्वेद 3/7
2. अथर्ववेद 5/23/6
3. यजुर्वेद 4/4
4. ऋग्वेद 1/50/4

**योजनानां सहस्त्रो द्वे द्वे शते द्वे च योजने।**

**एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते।।**

अर्थात् हे सूर्य! तुम्हारी गति आधे निमेष में दो हजार दो सौ दो योजन है। और एक योजन का मान शब्दकोषों के आधार पर 9 मील के बराबर होता है। अतः इसके अनुसार प्रकाश की गति 18641322 मील प्रति सेकेण्ड अर्थात् एक लाख छियासी हजार मील से कुछ अधिक आती है। जो कि आधुनिक विज्ञान द्वारा प्रदत्त प्रति सेकेण्ड 186.281 मील से पूर्ण रूपेण साम्य रखती है। पृथिवी से सूर्य की दूरी लगभग 9 करोड़ 14 लाख 6 हजार मील या 24 करोड़ 96 लाख किलोमीटर है।

अतः सूर्य की किरणें लगभग 8 मिनट 20 सेकेण्ड में पुथिवी पर आ जाती है। इन बातों से हमें यह भी ज्ञान मिलता है कि भारतीय आचार्यों को प्रकाश की गति का स्पष्ट ज्ञान 15 वीं शताब्दी से बहुत पहले से ही था ।



यजुर्वेद का कथन है कि पृथिवी सूर्य का चक्कर काटती है और सूर्य अपनी धूरी पर घूमता है तथा जिस प्रकार सूर्य के पहिए की गति निरन्तर गतिशील है उसी प्रकार यह संसार भी गतिशील है – "समाववर्ति पृथिवी समुषाः समु सूर्य :। समु विश्वमिदं जगत्"।[1] तथा "स सूर्यः.. ...ववृत्याद् रथ्येव चक्रा ।"[2] ऋग्वेद में इस सम्बन्ध में लिखा है कि सूर्य सौर मण्डल को घुमाता

1. यजुर्वेद 20/23
2. ऋग्वेद 10/89/2

है । इसके अतिरिक्त वर्ष चक्र , नक्षत्र मण्डल , अहोरात्र चक्र आदि घूमने के भी पर्याप्त प्रमाण उपलब्ध हैं। यथा-" चित्राणि साकं दिवि रोचनानि सरीसृपाणि भुवने जवानि ।"[1] पृथिवी सूर्य की प्रदक्षिणा करती है। ऋग्वेद के अनुसार भी पृथिवी सूर्य के चारों ओर प्रदक्षिणा करती है।

आचार्य आर्यभट ने लिखा है कि एक प्राण के बराबर समय में पृथिवी एक कला घूमती है।[2] एक प्राण या सांस चार सेकेण्ड का होता है । इस प्रकार एक दिन में 12600 प्राण हुए और पृथिवी एक प्राण में एक कला घूमती हुई 14 घंटे में एक चक्कर अर्थात् 360 अंश पूरा कर लेती है। इसी के समर्थन में यह भी कहा गया है कि पृथवी पश्चिम से पूर्व की ओर घूमती है- "भूमिः प्राङ्मुखी भ्रमति।"

**आकर्षण शक्ति** - वेदों में आकर्षण शक्ति का वर्णन अनेक मंत्राों में मिलता है। वेद में वर्णित है कि सूर्य ने अवलंबन रहित स्थान में द्युलोक को अपने आकर्षण से रोका हुआ है। सूर्य के आकर्षण के कारण ही द्युलोक रूका हुआ है। आकाश में कहीं कोई अवलंबन नहीं है। द्युलोक के सभी नक्षत्रा आदि सूर्य की आकर्षण शक्ति से रूके हुए हैं। -

**स्वर्णरम् अन्तरिक्षाणि रोचना द्यावाभूमी पृथिवीं स्कम्भुरोजसा ।**[3]

ध्यातव्य हो कि आज के वैज्ञानिकों ने शोध करके यही निष्कर्ष निकाला है कि पृथिवी और अन्य ग्रह सूर्य के आकर्षण के कारण उस पर अवलम्बित हैं और उसके चारों ओर घूमते हैं। तथा पृथिवी पश्चिम से पूर्व की ओर घूमती है। तथा वैज्ञानिक जो यह बात कहते हैं कि परमाणुओं में आकर्षण शक्ति है इसका उदाहरण हमें वेदों में अनेकत्र प्राप्त होता है।

सूर्य के चारों ओर जो ग्रह चक्कर काटते हैं वे निम्न हैं- 1 बुध 2 शुक्र 3 पृथिवी 4 मंगल 5 बृहस्पति 6 शनि 7 यूरेनस 8 नैप्चयून 9 और प्लेटो।

ऋग्वेद में इस बात को स्पष्ट कहा गया है कि परमाणुओं में आकर्षण शक्ति है अतः प्रत्येक परमाणु दूसरे परमाणु को सदा आकुष्ट करता है -"एको अन्यत् चकृषे विश्वम् आनुषक्।"[4]

**सौर उर्जा** - वेदों में सौर उर्जा से सम्बन्धित पर्याप्त जानकारी उपलब्ध है। अथर्ववेद के एक मंत्रानुसार सूर्य समस्त उर्जा का स्रोत है। वही उर्जा का स्रोत है वही उर्जा का स्वामी है। इसका अभिप्राय यह है कि हमें सभी प्रकार की उर्जा सूर्य से ही प्राप्त होती है। अर्थात् उर्जा का अन्तिम आश्रय सूर्य ही है -"सविता प्रसवानाम् अधिपति ।"[5] ऋग्वेद के एक अन्य वर्णन के अनुसार परमात्मा ने सूर्य में उर्जा का खजाना रखा है । ऋषियों ने उर्जा को निकाला और प्रयोग किया। सौर उर्जा को निकालने का और प्रयोग करने का श्रेय वशिष्ठ, वशिष्ठ पुत्रों एवं भारतद्वाज ऋषि के

1. अथर्ववेद 19/7/1
2. आर्यभटीय का. 4
3. ऋग्वेद 10/65/4
4. ऋग्वेद 1/52/14
5. अथर्ववेद 5/24/1

वंशजों को है। "आ सूर्याद् अभरन् घर्ममेते।"[1]

**सूर्यग्रहण** –वैज्ञानिकों के अनुसार पृथिवी और सूर्य के बीच में चन्द्रमा के आ जाने पर ही सूर्यग्रहण होता है । इस विषय में ऋगवेद में कहा गया है कि सूर्य ग्रहण में स्वर्भान सूर्य को अपने अंधकार से ढक लेता है ।[2]

**सूर्योदय तथा सूर्यास्त** – वैज्ञानिकों के अनुसार सूर्य का न तो कभी उदय होता है न तो कभी अस्त उदयास्त तो केवल व्यवहार के लिए है। वेदों में इस बारे में कहा गया है कि सूर्य सदा अपने स्थान पर प्रकाशमान रहता है तथा सदा प्रकाश देता है । पृथिवी की परिक्रमा के कारण ही उदयास्त या रात्रि और दिन होते हैं – "स वा एष न कदाचनास्तमेति नोदेति।"[3] वैज्ञानिकों के अनुसार वर्षा का कारण सूर्य ही है। यजुर्वेद तथा अथर्ववेद में उल्लेख है कि सूर्य की किरणें समुद्र से जल को भाप के रूप में ऊपर ले जाती है और भूमि पर वर्षा करती है। सूर्य की किरणों को वृष्टिवनि वृष्टिदाता या वृष्टिकर्त्ता भी कहते हैं –"सूर्यस्य रश्मये वृष्टिवनये ।"[4]

**द्रव्य तथा उर्जा का रूपान्तरण** – प्रो. आइनस्टाइन ने यह सिद्धांत प्रतिपादित किया है कि द्रव्य तथा उर्जा में से कोई भी चीज न नष्ट की जा सकती है और न उत्पन्न की जा सकती है केवल इनका रूपान्तरण होता है। उर्जा द्रव्य में परिवर्तित होती है और द्रव्य उर्जा में । इसके लिए उन्होनें सूत्र दिया है –$E=kk\,mc^2$ इसमें E उर्जा के लिए है तथा M-mass या द्रव्य के लिए है। C-speed of light अर्थात् प्रकाश की गति के लिए है। ऋग्वेद के एक मंत्र में स्पष्ट उल्लेख है कि अदिति (masS) से दक्ष या उर्जा (Oxygen) उत्पन्न होती है। तथा दक्ष से अदिति। इसका अभिप्राय यह है कि उर्जा और द्रव्य परस्पर रूपान्तरित हो सकते हैं अर्थात् उर्जा से द्रव्य और द्रव्य से उर्जा ।[5]

**निष्कर्ष** –अतः उपर्युक्त विवेचन के आधार पर निष्कर्ष यह निकलता है कि वैदिक साहित्य न सिर्फ पूजा धर्म कर्म इत्यादि कथनों का विवेचन करता है बल्कि वेद में वैज्ञानिक तथ्य भी भरे हुए हैं। वैदिक साहित्य में सूर्य सम्बन्धी अनेक सैद्धान्तिक तथा मौलिक विशेषताएँ विद्यमान हैं जिसके अविष्कार का श्रेय आज के वैज्ञानिक ले रहे हैं इसलिए उपर्युक्त इन वर्णनों के आधार पर कहा जा सकता है कि वैज्ञानिक जो बातें आज बता रहे हैं वेद ने आदिकाल में ही मनुष्यों को इसका ज्ञान दे दिया था। अतः इस शोध पत्र का उद्येश्य उन लोगों को यह बताना है कि जो वेद को सिर्फ पूजा पाठ से सम्बन्धित ग्रंथ कहते हैं तथा सभी अविष्कारों का श्रेय आज के वैज्ञानिकों को देते हैं कि वेद सभी ज्ञान का स्त्रोत है ऐसी कोई समस्या ही नहीं जिसका समाधान वेद में न दिया गया हो सिर्फ उसे सही तरीके से समझने तथा व्याख्या करने की जरूरत है। कोई भी वेद के

1. ऋग्वेद 1/181/3
2. ऋग्वेद 5/40/6
3. ऐतरेय ब्राह्मण 3/44
4. यजुर्वेद 38/6
5. ऋग्वेद 10/72/4

बारे में यह नहीं कह सकता है कि वेद सिर्फ एक धर्म सम्बन्धित ग्रंथ है। और उपर्युक्त वर्णनों के आधार पर हमें सूर्य के बारे में जो जानकारी प्राप्त होती है उसे हम संक्षिप्त रूप में इस प्रकार देख सकते हैं –

1 सूर्य चर और अचर संसार की आत्मा है ।

2 सूर्य उर्जा का स्रोत है ।

3 सूर्य सौरमण्डल के ग्रहों उपग्रहों नक्षत्रों आदि का पूर्णतया नियन्ता है ।

4 सूर्य की किरणों से प्रकाश संश्लेषण प्रक्रिया का संकेत मिलता है ।

5 सूर्य की सात किरणें संसार के सभी पदार्थों को रंग रूप देती हैं तथा विभिन्न रोगों को नष्ट करती है।

6 सूर्य की किरणों से विद्युत प्रवाहित होती है।

7 सूर्य के चारों ओर गैस फैली हुई है।

8 सूर्य का न तो कभी उदय होता है और न ही अस्त। उदयास्त तो केवल व्यवहार के लिए है।

9 सूर्य अपनी धुरी पर घूमता है तथा पृथिवी उसके चारों ओर चक्कर काटती है।

10 सूर्य ने अपनी आकर्षण शक्ति द्वारा पृथिवी को रोका हुआ है।

11 सूर्य में प्राण और अपान दोनों शक्तियाँ विद्यमान है।

वैदिक सूक्तों के अध्ययन से हम सूर्य के भव्य रूप से परिचित हो जाते हैं। सूर्य विश्व में चैतन्य का संचरण करता है तथा समस्त लोकों को नाना व्यापारों में प्रेरित करता है। समस्त भुवनों का आधार ही सूर्य है। वेदों से हमें सूर्य तथा सौर उर्जा के सम्बन्ध में विस्तृत जानकारी मिलती है जो हमारे लिए भौतिक विज्ञान में उपयोगी तथा सहायक होते हैं। अत: नि:संकोच भाव से कह सकते हैं कि आधुनिक विज्ञान वेद की ही उपज है अर्थात् आज विकास के इस दौड़ में जिस विज्ञान को माध्यम बनाया जा रहा है वह विज्ञान कोई नई बात या नया सिद्धांत नहीं दे रहा है वरन् उन्हीं पुराने सिद्धांतों या विचारों को जिसे ऋषियों ने अपने जीवन में उतारने के बाद प्रयोग की तराजू पर तोल कर उसकी रचना की थी। वेद का समय वह था जहाँ विकास स्थूल सूक्ष्म से स्थूल की ओर हुआ था और विज्ञान का समय वह है जहाँ विकास से सूक्ष्म की ओर बढ़ रहे हैं। वेद हमारे ज्ञान का अक्षुण्ण भंडार है। इसलिए मनु का "सर्वज्ञानमयो हि स:" यह वचन सर्वथा सत्य और प्रामाणिक होता है। एक सर्वप्रमुख तथ्य यह कि सूर्य सम्बन्धित सूक्तों में जितनी धार्मिकता भरी हुई हैं उससे भी कहीं ज्यादा वैज्ञानिकता। अत: इसी कारण से उसका भैतिक स्वरूप नवीन ज्ञान प्राप्त करने की दृष्टि से अति महत्त्वपूर्ण है। अत: वेदों में सूर्य सम्बन्धित वैज्ञानिकता को सिद्ध करना ही प्रस्तुत शोध प्रबन्ध का उद्देश्य है।

**संदर्भ ग्रंथ सूची** ( Bibliography)

* *ऋग्वेदसंहिता* (सं) डा. शशि तिवारी, ओरियेण्टल पब्लिशर्स दिल्ली 2002

* *ऋग्वेदसंहिता* (सं) शिवनाथ अहिताग्नि, ओरियेण्टल पब्लिशर्स दिल्ली 2001

* *यजुर्वेदसंहिता* (सं) सुरेन्द्र प्रताप, नाग पब्लिशर्स दिल्ली 1990

* *यजुर्वेदसंहिता* (सं) रवि प्रकाश आर्य परिमल पब्लिकेशन दिल्ली 2002

* *अथर्ववेदसंहिता* (सं) नागशरण सिंह, नाग पब्लिशर्स दिल्ली 1987

* *अथर्ववेदसंहिता* (सं) देवी चन्द, मुंशीराम मनोहरलाल दिल्ली 2001

* *ऐतरेय ब्राह्मणम्* , सायणभाष्यसमेतम्, आनन्दाश्रम, पुण्यपत्तन 1930

* *सांख्यकारिका*, श्री ईश्वर कृष्ण (सं) डा. बैद्यनाथ पाण्डेय, भारतीय विद्या प्रकाशन, दिल्ली 2002

* *गीता*, गीता प्रेस गोरखपुर, सम्वत् 2026

* *वैदिकविज्ञान*, श्री गिरिधर शर्मा चतुर्वेदी श्री लाल बहादुर शास्त्री राष्ट्रीय संस्कृत विद्यापीठ दिल्ली 2005

* *वेदविज्ञानवीथिका*, डा. दयानन्द भार्गव, राजस्थानी ग्रंथागार जोधपुर

* *वैदिक विचारधारा का वैज्ञानिक आधार*, सत्यव्रत सिद्धांतालंकार, विजयकुमार गोविन्दराम हासानन्द, दिल्ली 1994

* *वेदों में विज्ञान*, डा. बलराज शर्मा, दिल्ली 1991

* *वेद विद्या*, डा. वासुदेव शरण अग्रवाल, रामप्रसाद एण्ड सन्स, आगरा।

# ज्योतिषशास्त्रीय नवविधकालमान विवेचना

**श्री रतीश कुमार झा**

ज्योतिषशास्त्र को कालविधायक शास्त्र माना जाता है। काल शब्द की निष्पत्ति 'कलसंख्याने' धातु से हुई है। 'कलयति गणयति इति कालः'

**काले तपः काले ज्येष्ठं काले ब्रह्मसमाहितम्।**
**कालो ह सर्वस्येश्वरो यः पिताऽऽसीत् प्रजापते।।**[1]

मूल शास्त्र वही है जो पहले भगवान् भास्कर सूर्य ने बतलाया था। केवल युग के परिवर्तन से इस शास्त्र में काल भेद उत्पन्न हो गये है।

**शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह भास्करः।**
**युगानां परिवर्तेन कालभेदोऽत्र केवलः।।**[2]

काल दो प्रकार के हैं एक सृष्टि का अभ्युदय तथा संहार का बोधक बनता है, तो दूसरा समय की गणना करने वाला होता है। जैसा कि सूर्यसिद्धान्त में वर्णित है। यथा–

**लोकानामन्तकृत्कालः कालोऽन्यः कलनात्मकः।**
**स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते।।**[3]
**कालः सृजति भूतानि कालः संहरति प्रजाः।**[4]

इस प्रकार काल की दो संज्ञाएँ हैं, स्थूल, मूर्त तथा दूसरा सूक्ष्म, अमूर्त।

**प्राणादिः कथिता मूर्तस्त्रुट्याद्योऽमूर्तसंज्ञकः।**
**षड्भिः प्राणैर्विनाडीस्यात्तत्षष्ट्या नाडिका स्मृता।।**
**नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्तितम्।**
**तत् त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा।।**[5]

---

1 अथर्ववेद 19.53.8
2 सूर्यसिद्धान्ते मध्यमाधिकारे श्लोकसंख्या– 9
3 सूर्यसि. 1.10
4 सूर्यसि. 1.7 उक्ति
5 सूर्यसिद्धान्ते मध्यमाधिकारे श्लोकसंख्या–11,12

